# संस्कृतकथासंग्रहः

## ( खण्डद्वयात्मकः )

## [ For Stds. IV & V ]


BY

D. K. RAJGURU, B. A.

SANSKRIT TEACHER, WILSON HIGH SCHOOL, BOMBAY

*Author of* नलोपाख्यानम्, सावित्र्युपाख्यानम् etc.





KARNATAK PUBLISHING HOUSE,

BOMBAY 2

**As. 10**

# Preface.

This Book, consisting of two parts, is intended for the students of standards IV & V.

The stories, adopted in this Book, are extracts, from well-known Books like रामायण, महाभारत, कथासरित्सागर, etc. Many stories, e.g., दक्षमख, लङ्कादहन, उषा, etc., which are nowadays being shown on the screen, will naturally be easily intelligible to the student-world. The dialogues, selected from the best Sanskrit dramas like शाकुन्तल, मृच्छकटिक, विक्रमोर्वशीय, etc., will be found most handy in enhancing the use of Direct Method now in vogue. Several alterations have been made in the original passages in order to suit the standards for which this Book is intended.

As a special feature of this Book, various types of Exercises, such as, "Separate the words," "Fill in the blanks," "Change the voice," etc, have been added at the end of each story. In the second part of this Book, which is chiefly meant for standard V, an exercise on Compounds has been added. And the teachers will do well to get these exercises solved by the students.

At the end of some stories general questions have been suggested and the teachers are recommended to ask questions and get their answers in Sanskrit only. Besides these general questions, I had at first given at the end of each story, a number of questions on that story, to give the students a practice in Sanskrit conversation. From the story of श्रीरामचंद्र, questions such as, "कस्य पुत्रः रामचंद्रः"। "कस्य सुता जानकी"। "केनापहृता सीता"। were suggested. On a second thought, however, I omitted these questions, not because I had anything against this method but because I felt that the teachers would easily be able to

frame enough questions for themselves. The value of conversation, in making this dead Sanskrit Language a living one, can never be doubted.

Miscellaneous verses are added at the end of each Part, most of which are from Hitopadesha as they are most instructive and are very easy to understand.

A very important and note-worthy element has been introduced in this Book at the suggestion of Mr. M. N. Kulkarni, the Publisher of this book At the beginning of some stories, pictures, suggestive of the contents therein, have been given. These pictures will enable the students to understand the story easily and will also help a good deal in asking questions to the students. I have, therefore, to acknowledge my indebtedness to Mr. M. N. Kulkarni, the Proprietor of the Karnatak Printing Press, for the happy suggestion of introducing pictures in this Book as well as for the promptness and zeal with which he brought this book to light within a very short time.

BOMBAY<br>
21 *st June* 1935. D. K. R.

## Preface to the second edition.

It gives me great pleasure to place before the public this second edition of संस्कृतकथासंग्रह parts I & II. Even a casual glance at the book will convince the reader, that efforts have been made, to make the book more interesting and useful to the students. With this end in view, three short-stories from part I have been omitted and five new stories with illustrative pictures and two new dialogues have been added to it. A few new stories have also been added to part II as well.

Some difficult words have been simplified;' the forms of Perfect occurring in the poetical passages are substituted by the forms of Imperfect, in the notes; and the miscellaneous verses at the end have been arranged in groups of seven or eight each to suit the requirements of teachers.

In part II the topic of Compounds has been dealt with in a simple and intelligible manner. Many important compounds of frequent occurrence in Sanskrit Literature have been dissolved and defined and a few exercises on compounds have been added at the end to facilitate the work of revision.

I have to thank the public for the appreciation they have shown of this little book and the encouragement they have given me in publishing this second edition.

BOMBAY
*18th April* 1938.

D. K. R.

# अनुक्रमणिका



## प्रथमखंडः

## द्वितीयखंडः

# संस्कृतकथासंग्रहः

## प्रथमखंडः

### १. आम्रवृक्षः ।

पश्यत बालका एतमाम्रवृक्षम् । अस्मिन्वृक्षे बहूनि पर्णानि फलानि च



सन्ति । एतेषां वर्णो हरितोऽस्ति । एतान्याम्रफलानि पक्वानि न सन्ति । तेषां रसोऽम्लः । पक्वानामाम्रफलानां रसोऽतिमधुरोऽस्ति । आम्रफलानि बालकेभ्योऽतीव रोचन्ते । अपि च, सहकारः श्रान्तेभ्यः पथिकेभ्यश्छायां यच्छति ।

रसालः पादपो मङ्गल इति जना मन्यन्ते ।

EXERCISES.

( 1 ) (a) Find out adjectives in this lesson.
(b) How are adjectives used in Sanskrit ?
(c) Give Sanskrit words for:—white, black, yellow, brown.

( 2 ) State the case of बालकेभ्यः and पथिकेभ्यः; why are these words put in that case ?

Note :—Write the following sentences in Sanskrit, using the verbs दा ( यच्छ ) and रुच्.

'Rama likes sweet-meats;' 'A king gives wealth to mendicants.'

आम्रः, सहकारः, रसालः A mango tree. हरित Green. पक्व Ripe. अम्ल Sour. पथिकः A traveller. अतीव Very. मङ्गल Auspicious.

---

## २. सिंहः ।

सिंहो हिंस्रः पशुरस्ति । सोऽतीव क्रूरो वर्तते । स व्याघ्रान्गजानपि निषूदयते । तेषां मांसं च भक्षयति । पर्वतानां कंदरेषु स सदा निवसति । सर्वेषु श्वापदेषु स श्रेष्ठो बलिष्ठश्च । अत एव तं मृगपतिरिति वदन्ति ।



एतस्मिन्नालेख्ये सिंह एको दृश्यते । तस्य समीपमेका सिंही द्वौ सिंहबालकौ चोपविष्टाः सन्ति ।

EXERCISES.

( 1 ) To what parts of speech do the following words belong ?

अतीव, क्रूर, कंदरः, सर्व, श्रेष्ठ, बलिष्ठ and सन्ति.

( 2 ) (a) Give all the cases of the following words :—

मृगपति, पशु and सिंही.

(b) Give the forms of the present tense of the following roots :—

अस् to be, वृत् and नि–सूद्.

( 3 ) Fill in the blanks :—

( 1 ) सिंहः — पशुरस्ति ।

( 2 ) सोऽतीव — वर्तते ।

( 3 ) स पर्वतानां — सदा निवसति ।

( 4 ) Prepare the following sentences in Sanskrit similar to those that are in this lesson :— ‘ A cat kills mice;’ ‘men live in houses;’ ‘a tiger also is very cruel. ’

हिंस्र Murderous. बलिष्ठ Very powerful. मृगपतिः The lord of beasts. आलेख्यम् A picture.

---

## ३. अस्मत्पाठशाला।



इयमस्मत्पाठशाला। अत्रागच्छति छात्रगणः प्रतिदिनं विद्यार्जनाय। अस्मिन् विद्यालयेऽनेकान् विषयान् विविधा भाषाश्च शिष्या आचार्येभ्यः शिक्षन्ते। शिक्षका अपिताननतिस्नेहेन शिक्षयन्ति। अस्य विद्यामंदिरस्य पुरो विस्तीर्णं प्राङ्गणमस्ति। अस्मिंश्च कुमारा विश्रांतिसमये कन्दुकैः क्रीडन्ति। अस्य प्राङ्गणस्यैकदेशेऽल्पकं रमणीयमुद्यानं वर्तते। तस्मिन् वृक्षकारोपणं बालका एव कुर्वन्ति। अन्यस्मिन्प्रदेशेऽस्य प्राङ्गणस्य व्यायामशालाऽपि वर्तते। अस्यां च बाला अध्ययनानन्तरं शरीरवृद्ध्यर्थं व्यायामं सेवन्ते।

छात्राः, पाठशालां प्रतिदिनं गत्वा स्वपाठान् पठत।

### Exercises.

(1) Fill in the blanks :—

(i) तस्मिन् वृक्षकारोपणं — एव कुर्वन्ति।

(ii) छात्राः, पाठशालां — स्वपाठान् —।

(2) Separate the following words :—
भाषाश्च; अस्मिंश्च; प्राङ्गणस्यैकदेशोऽल्पकम्.

(3) On the same lines as shown in the above description of a school, give in Sanskrit a description of a temple.

गणः A group. विस्तीर्ण Large. कन्दुकः-कं A ball. आरोपणम् Planting. व्यायामः Exercise.

---

## ४. सारमेयः ।




सारमेयश्चतुष्पदः प्राण्यस्ति । तस्य चत्वारः पादा द्वौ कर्णौ द्वे नेत्रे एकं लाङ्गूलं च सन्ति । अस्मिंश्चित्रे लिखितस्य कुक्कुरस्य वर्णः श्वेतोऽस्ति । क्वचिच्च तेषां वर्णः कृष्णः पिंगलोऽपि विद्यते । शुनकानां विविधा जातयः सन्ति । प्रायस्तेषामुपयोगो गृहरक्षणार्थमेव क्रियते ।

शृणुत बालकाः कस्यचित्सारमेयस्य कथाम् ।

अथैकदा कश्चिद्बालकस्तस्य भगिनी च क्रीडायै समुद्रस्य तीरं गतौ। ताभ्यां सह तयोः सारमेयोऽपि गत आसीत्। तीरं प्राप्य तावुभौ सिकताभिः क्रीडितुं प्रवृत्तौ। कुक्कुरश्च तयोरन्तिके भूमौ निषण्ण आसीत्। ततः सा बाला सागरस्य जलमवलोक्य कुतूहलात्तत्प्रवेष्टुमैच्छत्। सहसैवोत्थाय साऽलक्षितैव स्वभ्रात्रा सलिलं प्रविष्टा। प्रविष्टमात्रैव भयेन व्याकुला सोच्चैराक्रोशितुं प्राक्रमत।

तस्या आक्रोशं श्रुत्वा स सारमेयः शीघ्रमधावदुदकं च प्राविशत्। तस्या वस्त्रान्तं मुखे धृत्वा तामाकृष्य सुरक्षितं तीरमानयत्। एवं तेन कुक्कुरेण तस्या बालिकायाः प्राणा रक्षिताः।

## EXERCISES.

( 1 ) Separate the following words :-
कश्चिच्च; अथैकदा; तावुभौ; सहसैवोत्थाय.

( 2 ) Mention all the words which you find in this lesson for 'a dog' and 'water.'

( 3 ) How are the words सिकता and प्राण used in Sanskrit ?

( 4 ) Give all the forms of Imperfect of the following roots :—
अस् to be, इष्, प्र–क्रम्, प्र–विश्, आ–नी.

( 5 ) Give Sanskrit words for one, two, up-to ten.
Note :—Write the following sentences in Sanskrit :—

'A man has two hands, two legs and two eyes;' 'in the garden there are five mango-trees, nine plantain trees and two bakul trees.,

सारमेयः, कुक्कुरः, शुनकः A dog. चतुष्पद One having four legs; a quadruped. सिकता Sand. निषण्ण Sat. अलक्षित Unseen.

---

## ५. संकीर्णश्लोकाः ।

वरमेको गुणी पुत्रो न च मूर्खशतान्यपि ।
एकश्चन्द्रस्तमो हन्ति न च तारागणोऽपि च ॥ १ ॥
यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत् ।
एवं पुरुषकारेण विना दैवं न सिध्यति ॥ २ ॥
उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः ।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥ ३ ॥
माता शत्रुः पिता वैरी येन बालो न पाठितः ।
न शोभते सभामध्ये हंसमध्ये बको यथा ॥ ४ ॥
रूपयौवनसंपन्ना विशालकुलसंभवाः ।
विद्याहीना न शोभन्ते निर्गन्धा इव किंशुकाः ॥ ५ ॥
शशिना च निशा निशया च शशी
शशिना निशया च विभाति नभः ।
पयसा कमलं कमलेन पयः
पयसा कमलेन विभाति सरः ॥ ६ ॥

हन्ति Removes. तमस् Darkness. पुरुषकारः Manly exertion. सिध्यति Succeeds. पाठितः Taught. रूप० Possessed of beauty and youth. विशाल० Born of a noble family. निर्गन्धाः Having no smell. किंशुक A kind of flower. शशिन् The moon. पयस् Water.'

---

## ६. धेनुः ।



कुमारा इयं धेनुरस्ति । धेन्वाः कुक्कुर इव चत्वारः पादाः पुच्छमेकं च सन्ति । किंतु तस्या द्वे श्रृंगे स्तः । तृणं तस्या अन्नम् । सा स्वभावत एव सौम्या वर्तते । धेनूनां निवासस्थानं गोशालेति वदन्ति । साऽतीवोपयुक्ता लोकानाम् । तस्या दुग्धं हि लभ्यते । भारतवर्षीया जना धेनुं देवतां मन्यन्ते । तस्याः पूजां च कुर्वन्ति ।

पुराऽऽसीद्वसिष्ठो नाम महर्षिः । तस्य शबला नामैका धेनुरासीत् । तां कान्यकुब्जाधिपतिर्विश्वामित्रो बलादपहर्तुमैच्छत् । ततस्तया धेन्वा स्वशरीरान्म्लेच्छाः सृष्टाः । तैश्च विश्वामित्रः पराजितः । अहो महाप्रभावो धेन्वाः ।

### EXERCISES.

(1) Fill in the blanks :—

(i) सा स्वभावत एव — वर्तते ।
(ii) तस्या — लभ्यते ।
(iii) तस्य — नामैका धेनुः — ।
(iv) तैश्च — पराजितः ।

(2) Give Dat., Abl., Gen. and Loc. singulars of धेनु.

( 3 ) Write the following sentences in Sanskrit :— 'Milk of a cow is the food of children;' 'a bull has two horns;' 'a bull ploughs fields and is useful to men.'

सौम्य Gentle. अप–हृ To take away. सृष्ट Created.

---

## ७. श्रीरामचंद्रकथा।

### ( प्रथमो भागः )

पुराऽऽसीद्दशरथो नामायोध्याधिपतिः। तस्य गृहे भगवान्विष्णुर्जातः। स च लोके राम इति ख्यातोऽभवत्। राघवो बाल एव विश्वामित्रस्याश्रमं गत्वा तत्र मारीचं नाम राक्षसं न्यषूदयत। तस्मै च विश्वामित्रेणास्त्राणि




शत्रूणां वधार्थं दत्तानि। ततश्च विदेहनगरीं गत्वा माहेश्वरं चापं लीलया तेन भग्नम्। जनकस्य सुतां सीतां नाम स पर्यणयत्। तया सह स पुनरयोध्यामागतः।

EXERCISES.

(1) (a) Separate the following words :—

विष्णुर्जातः; पुराऽऽसीद्दशरथः ; ततश्च.

(b) Explain the following sandhis :—

राम इति; बाल एव.

(2) Fill in the blanks in the following sentences :—

(i) स लोके — इति ख्यातः — ।

(ii) राघवो मारीचं नाम — न्यषूदयत ।

(iii) जनकस्य — — नाम स पर्यणयत् ।

जात Born. ख्यात Well-known. न्यषूदयत Killed. अस्त्रम् A miraculous weapon. माहेश्वरं चापम् A bow belonging to महेश्वर, a name of God Shankara. पर्यणयत् Married.

---

## ८. श्रीरामचंद्रकथा ।

### ( द्वितीयो भागः )




अथ कालान्तरेण स पितृवचनात्सीतया लक्ष्मणेन च सह वनं गतः । तत्र

च चतुर्दश वर्षाणि न्यवसत्। धर्मात्मा राघवो जनस्थाने राक्षसानां चतुर्दश सहस्राण्यहन्। तदा तस्य भार्या जानकी रावणेनापहृता। भार्यावियोगेन दुःखितः स किष्किधां गत्वा सुग्रीवेण सह मैत्रीं कृतवान्। तत्र च वानरेन्द्रं वालिनं हत्वा सुग्रीवं राज्येऽभ्यषिञ्चत्।

अनन्तरं समुद्रे सेतुं बद्ध्वा वानरैः सह लङ्कां प्राविशत्। तत्र च रावणं नाम लङ्केशं युद्धे न्यषूदयत। अनन्तरं सीतामादाय पुष्पकविमानेनायोध्यानगरीं पुनः प्राप्तः। वसिष्ठेन राज्येऽभिषिक्तोऽसौ मेदिनीं धर्मेणापालयत्।

## Exercises.

( 1 ) Separate the following words :—
सहस्राण्यहन्; राज्येऽभ्यषिञ्चत्; सीतामादाय.

( 2 ) Fill in the blanks in the following sentences :—
( i ) स पितृवचनात् — — च सह — गतः।
( ii ) तस्य — जानकी — अपहृता।
( iii ) स — हत्वा — राज्येऽभ्यषिञ्चत्।

( 3 ) Q. छात्राः, रामचंद्रस्य कथा संक्षेपेण कथ्यताम्।

धर्मात्मा Pious. जनस्थानं A name of a place where Rama lived with Sita and Laxman. अपहृत Carried away. मैत्री Friendship. सेतुः A bridge. विमानः–नं A balloon. मेदिनी The earth.

## ९. संकीर्णश्लोकाः ।

शरीरस्य गुणानां च दूरमत्यन्तमन्तरम् ।
शरीरं क्षणविध्वंसि कल्पान्तस्थायिनो गुणाः ॥ १ ॥
अयं निजः परो वेति गणना लघुचेतसाम् ।
उदारचरितानां तु वसुधैव कुटुम्बकम् ॥ २ ॥
उत्सवे व्यसने चैव दुर्भिक्षे राष्ट्रविप्लवे ।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः ॥ ३ ॥
परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम् ।
वर्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखम् ॥ ४ ॥
दुर्जनः प्रियवादी च नैतद्विश्वासकारणम् ।
मधु तिष्ठति जिह्वाग्रे हृदि हालाहलं विषम् ॥ ५ ॥
साधोः प्रकोपितस्यापि मनो नायाति विक्रियाम् ।
न हि तापयितुं शक्यं सागराम्भस्तृणोल्कया ॥ ६ ॥
यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ।
यस्यार्थाः स पुमाँल्लोके यस्यार्थाः स हि पण्डितः ॥ ७ ॥

अन्तरम् Difference. क्षणविध्वंसिन् Perishing in a moment. कल्पान्तः The destruction of the universe. निज One's own. परः A stranger. लघुचेतसाम् Of low-minded persons. उदारचरितानां Of noble persons. दुर्भिक्षं A famine. राष्ट्रविप्लवः A change in the kingdom. तिष्ठति Stands by, helps. परोक्षे In one's absence. कार्यहन्तृ One who destroys another's work. प्रत्यक्षे In one's presence. विषकुम्भः A pot containing poison. पयोमुखम् With milk at the

mouth. हालहालं विषं A deadly poison. प्रकोपित Excited; tormented. विक्रिया A change. तापयितुं To heat. तृणोल्का A torch of hay. यस्यार्थाः One who possesses wealth.

---

## १०. मुद्रिकायाः प्राप्तिः ।

( ततः प्रविशति श्यालः पश्चाद्रक्षकौ पुरुषश्च । )

**रक्षकौ**—रे तस्कर, कथय कुत्र त्वयैषा मुद्रिका लब्धा ।

**पुरुषः**—प्रसीदत सुजनाः । अहमीदृशं कर्म न कदापि करोमि।

**प्रथमः**—किं शोभनो ब्राह्मण इति मत्वा पारितोषिकं दत्तम् ।

**पुरुषः**—अहं जात्या धीवरोऽस्मि ।

**द्वितीयः**—रे शठ, किमस्माभिर्जातिः पृष्टा ।

**श्यालः**—सूचक, कथयतु सर्वमनुक्रमेण ।

**सूचकः**—यथाज्ञापयति भर्ता ।

**पुरुषः**—एकस्मिन् दिवसे रोहितो नाम मत्स्यो मया खण्डशः कृतः। तस्योदरे मयैषा मुद्रिका दृष्टा। तस्या विक्रयाय दर्शयन् गृहीतो भवद्भिः । मारयत वा मुञ्चत वा । अयमस्या आगमस्य वृत्तान्तः।

**श्यालः**—जानुक, निःसंशयं धीवर एवैषः । भवतु । राजकुलमेव गच्छामि । तावत्प्रतिपालयेमं नरम् ।

( गच्छति श्यालः )

**प्रथमः**—जानुक, स्फुरतो मम हस्तावस्य वधाय ।

**द्वितीयः**—नैतदुचितं कस्यापि प्राणान् कारणं विनापहर्तुम् ।

**प्रथमः**—जानुक, किमित्यस्मद्भर्ता नाद्याप्यायातः ।

**द्वितीयः**—( विलोक्य ) एष आवयोः स्वामी इत एवागच्छति ।

**श्यालः**—(प्रविश्य) सूचक, मुञ्चैनं धीवरम्।

**प्रथमः**—यथा भर्ता भणति।

**द्वितीयः**—एष यमसदनं प्रविश्य प्रतिनिवृत्तः।

(पुरुषं मोचयति।)

**श्यालः**—एष प्रसादोऽपि तस्मै राज्ञा दत्तः।

(पुरुषाय द्रव्यं यच्छति)

**पुरुषः**—(सप्रणामं गृहीत्वा) भर्तः, अनुगृहीतोऽस्मि।

**जानुकः**—भर्तः, तस्मिन्नङ्गुलीयके यद्रत्नं तन्महाराजस्य रुचयेऽभवदिति मन्ये।

**श्यालः**—नहि, नहि। अङ्गुलीयकं दृष्ट्वा भर्ता निजं प्रियजनमस्मरत्। अनन्तरं तस्य नेत्राभ्यामश्रूण्यगलन्।

**सूचकः**—सेवितं नाम भर्त्रा।

**जानुकः**—ननु भण अस्य धीवरस्य कृते। (इति पुरुषं मत्सरेण पश्यति)

**पुरुषः**—अस्यार्धं युष्माकं भवतु।

**जानुकः**—एतद्युक्तमेव।

**श्यालः**—धीवर, त्वमिदानीं मे प्रियवयस्यः संजातः। एहि, गच्छामो-वयम्।

(इति सर्वे गच्छन्ति)

Note :—A dialogue for boys to act.

मुद्रिका A ring. प्र–सद् To be pleased. खण्डशः कृतः Cut into pieces. विक्रयः Sale. प्रति–पा (Causal) To guard. अनु–ग्रह् To favour. रुचिः Liking. कृते (gov. gen.) For the sake of. आगमः Obtaining.

---

## ११. विवादो विनाशाय ।

एकदा कश्चिल्लुब्धकः पक्षिणामर्थे भूमौ पाशमयोजयत् । क्षणादेव तस्मिन्द्वौ शकुनौ बद्धावभवताम् । किंतु तावुभौ तं पाशमादायोदडयेताम् अनिर्विण्णोऽसौ व्याधस्तावन्वधावत् । तद्दृष्ट्वा कश्चित्पुरुषस्तं शाकुनिकमपृच्छत् । आकाशेन प्लवमानौ खगौ किमर्थं त्वमनुधावसीति । तदा तेनोक्तम् । एतौ विहगौ सहितौ मम पाशं हरतः । यदा तौ कलहं करिष्यतस्तदा मम वशं गमिष्यत इति । तस्मिन्नेव क्षणे तौ शकुनौ कलहमनुप्राप्तौ पृथिव्यां न्यपतताम् । व्याधस्तु तावुपसृत्यागृह्णात् ।




एवं ये जना मिथो विवादं गच्छन्ति ते शकुनाविव विनाशं गच्छन्ति ।

### EXERCISES.

(1) (*a*) Separate the following words:—

कश्चिल्लुब्धकः; क्षणादेव,: तेनोक्तम्.

(*b*) Explain the following sandhi:—

गमिष्यत इति ।

(2) Fill in the blanks :—

(i) कश्चिल्लुब्धको भूमौ — अयोजयत् ।

(ii) एतौ — सहितौ — पाशं — ।

(iii) — शकुनाविव — गच्छन्ति ।

(3) Explain the forms :—

बद्ध, निर्विण्ण, प्लवमान, उक्त.

(4) Q. विवादात्कीदृशः परिणामो जायते ।

लुब्धकः, व्याधः, शाकुनिकः, A fowler. पाशः A net. अनिर्विण्ण Not disappointed. प्लवमान Flying. खगः A bird. वशं गम् To go under one's control. मिथः Among themselves. विवादः A quarrel.

---

## १२. मूर्खपथिकस्य ।

कश्चिन्मुग्धोऽध्वगस्तीर्त्वा कृच्छ्रात्तृष्णातुरोऽटवीम् ।
नदीं प्राप्यापि न पपौ वीक्षांचक्रे परं जलम् ॥ १ ॥
तृषितोऽपि पिबस्यम्भः किं नेत्युक्तोऽत्र केनचित् ।
इयत्कथं पिबामीति मन्दबुद्धिरुवाच तम् ॥ २ ॥
किं दण्डयति राजा त्वां सर्वं पीतं न चेत्त्वया ।
इति तेनोपहसितोऽप्यम्बु मुग्धः स नापिबत् ॥ ३ ॥
एवं न शक्नुवन्तीह यद्यत्कर्तुमशेषतः ।
यथाशक्ति न तस्यांशमपि कुर्वन्त्यबुद्धयः ॥ ४ ॥

EXERCISES.

(1) Separate the following words :—

मुग्धोऽध्वगस्तीर्त्वा । पिबस्यम्भः । नेत्युक्तोऽत्र । तेनोपहसितोऽप्यम्बु ।

(2) Fill in the blanks:—
कश्चिन्मुग्धोऽध्वगः — तीर्त्वा नदीं — अपि न — अपिबत्।
तृषितोऽपि किमम्भः — — त्वम्।

(3) Explain the forms:—
मुग्ध, तीर्त्वा, प्राप्य, उपहसित.

(4) Q. Reproduce the verse which states the moral of this story.

मुग्ध Silly. अध्वगः, पथिकः A traveller. तृष्णातुर Thirsty. अटवी A forest. पपौ=अपिबत् Drank. वीक्षांचक्रे=ऐक्षत Looked. अम्भस् (*n.*) Water. उपहसित Ridiculed. अशेषतः Completely. यथाशक्ति According to one's capacity. अबुद्धिः A foolish person.

---

## १३. सीतायै भगवतो वसिष्ठस्याशीर्वादः।

**कञ्चुकी**—देव, ऋष्यशृङ्गाश्रमादष्टावक्रः संप्राप्तः।

**सीता**—आर्य, ततः किं विलम्ब्यते।

**रामः**—त्वरितं प्रवेशय।

[ कञ्चुकी गत्वा अष्टावक्रेण सह पुनः प्रविश्य ]

**अष्टावक्रः**—स्वस्ति वाम्।

**रामः**—भगवन्, अभिवादये। इत आस्यताम्।

**सीता**—भगवन्, नमस्ते। अपि कुशलं जामातुरार्यायाः शान्तायाश्च। अस्मानपि स्मरति।

**अष्टावक्रः**—अथ किम्। देवि, भगवान्वसिष्ठस्त्वामिदमाह। ' वत्से, भगवती पृथ्वी ते जननी, राजा जनकस्ते पिता, रघुकुलपार्थिवानां वधूस्त्वमसि। अतः केवलं वीरप्रसविनी भव' इति।

**रामः**—अनुगृहीताः स्मः।

EXERCISES.

(i) (*a*) Separate the following words :—
आश्रमादष्टावकः; शान्तायाश्च; वधूस्त्वमसि।

(*b*) Explain the following sandhi :—
इत आस्यताम्।

(2) Fill in the blanks :—
( i ) ऋष्यशृङ्गाश्रमात् — संप्राप्तः।
( ii ) अपि — जामातुरार्यायाः — च।
(iii) अतः केवलं — भव।

(3) Explain the force of अपि in the sentence, " अपि कुशलं " etc.

वि–लम्ब् (Atm.) To delay. प्रवेशय Admit. स्वस्ति Hail. अभि–वाद् ( Atm. ) To salute. आस् ( Atm. ) To sit. अथ किम् Yes. पार्थिवः A king. वधूः A daughter-in-law. अनु–ग्रह् To favour.

---

## १४. अपहृतगोधनं ब्राह्मणाय प्रत्यर्पणम्।

अथैकदा केचित्तस्कराः कस्यचिद्ब्राह्मणस्य गोधनमपाहरन्। तदा स ब्राह्मणः क्रुद्धः खाण्डवप्रस्थमागम्य पाण्डवानुदक्रोशत्। प्रसह्य ह्रियते गोधनं क्षुद्रैर्नृशंसैर्नरैः। धावत पाण्डवाः।

कुन्तीपुत्रो धनञ्जयस्तस्य विप्रस्य तानि वाक्यान्यशृणोत् । भीतो मा भवेति स तं द्विजमभाषत । किंतु तेषामायुधान्यासंस्तत्रासीद्धर्मराजः कृष्णया सह । अतोऽसौ सम्प्रवेशायाशक्त आसीत् । तदासौ कौन्तेयो दुःखितोऽचिन्तयत् ।

यद्यस्य विप्रस्याद्य रक्षणं न करोमि तर्हि महानधर्मो भवेत् । अनुप्रवेशे राज्ञस्तु वनवासो भवेन्मम । किंतु शरीरस्य विनाशेन धर्म एव श्रेष्ठः । इति विनिश्चित्यानुप्रविश्य धनुरादाय च ब्राह्मणं प्रत्यभाषत । ब्राह्मणाऽऽगम्यतां शीघ्रं यावत्ते क्षुद्रा न दूरे गता इति ।

स महाबाहुरनुसृत्य तांश्चौरानवजित्य तद्गोधनं तस्मै ब्राह्मणाय च प्रत्यर्प्य पुरमागच्छत् ।

## EXERCISES.

( 1 ) (*a*) Separate the following words:—

वाक्यान्यशृणोत् ।

तेषामायुधान्यासंस्तत्रासीद्धर्मराजः ।

तांश्चौरानवजित्य ।

(*b*) Explain the following sandhis:—

अशक्त आसीत् । धर्म एव । गता इति ।

( 2 ) Fill in the blanks :—

( i ) केचित्तस्करा ब्राह्मणस्य — अपाहरन् ।

( ii ) यद्यस्य —रक्षणं —करोमि —महान् — भवेत् ।

( 3 ) Explain the forms :—

आगम्य, ह्रियते, धावत, विनिश्चित्य, आगम्यताम्, प्रत्यर्प्य.

तस्करः A thief. गोधनं Wealth in the form of cows. प्रसह्य By force. कृष्णा A

name of द्रौपदी. विनिश्चित्य Having resolved. महाबाहुः One having long arms. प्रत्यर्प्य Having restored.

---

## १५. यूकामत्कुणयोः कथा ।

राज्ञः कस्यापि शयने चिरमासीदलक्षिता ।
यूका कुतश्चिदागत्य नाम्ना मन्दविसर्पिणी ॥ १ ॥
अकस्मात्तत्र चोपेत्य कुतोऽपि पवनेरितः ।
विवेश शयनीयं तट्टीटिभो नाम मत्कुणः ॥ २ ॥
मन्निवासमिमं कस्मादागतस्त्वं व्रजान्यतः ।
इति मन्दविसर्पिण्या स दृष्ट्वा जगदे तया ॥ ३ ॥
अपीतपूर्वं पास्यामि राजासृक्तत्प्रसीद मे ।
देहीह वस्तुमिति तामवादीत्सोऽपि टीटिभः ॥ ४ ॥
ततोऽनुरोधादाह स्म सा तं यद्येवमास्स्व तत् ।
किन्त्वस्य राज्ञो नाकाले दंशो देयस्त्वया सखे ॥
तच्छ्रुत्वा टीटिभः सोऽत्र तथेत्युक्त्वा व्यतिष्ठत ॥ ५ ॥
नक्तं शय्याश्रितं तं च नृपमाशु ददंश सः ।
उत्तस्थौ च ततो राजा हा दष्टोऽस्मीति ब्रुवन् ॥ ६ ॥
ततः पलायते तस्मिंस्त्वरितं मत्कुणे शठे ।
विचित्य राजभृत्यैः सा लब्धा यूका व्यपाद्यत ॥ ७ ॥

EXERCISES.

(1) Separate the following words:—चिरमासीदलक्षिता। कुतश्चिदागत्य। चोपेत्य। तद्वीटिभः। मन्त्रिवासमिमं। ततोऽनुरोधादाह। यद्येवमास्स्व। तच्छ्रुत्वा। तथेत्युक्त्वा। तस्मिंस्त्वरितम्।

(2) Explain the peculiarity of :—स्म; व्यतिष्ठत; कस्यापि।

(3) (*a*) विवेश=अविशत् (entered); जगदे=अगद्यत (was spoken); अवादीत्=अवदत् (spoke); ददंश=अदशत् (bit); उत्तस्थौ=उदतिष्ठत् (got up).

(*b*) Explain the forms:—उपेत्य, व्रज, देहि, आह, आस्स्व, सखे.

(4) State the moral of this lesson in Sanskrit in a single sentence.

शयनं—शयनीयं—शय्या A bed. अलक्षित Unnoticed. यूका A louse. मत्कुणः A bug. पवनेरित Wafted by the wind. व्रज् (व्रजति) To go. अपीतपूर्वम् Not drunk before. असृज् Blood. प्रसीद Be pleased. वस्तु To live. अकाले At an improper time. नक्तं At night. आशु Immediately. विचित्य Having searched. व्यपाद्यत Was killed.

---

## १६. सर्वदमनः सिंहशिशुना सह क्रीडति।

**प्रथमा तपस्विनी**—वत्स, मा खलु चापलं कुरु। कथं गत एवात्मनः प्रकृतिम्।

**राजा**—(अवलोक्य) को नु खल्वयं बालः। स प्रक्रीडितुं सिंहशिशुं, बलात्कारेण कर्षति।




**बालः**—जृम्भस्व सिंह, दन्तांस्ते गणयिष्ये ।

**प्रथमा**—अविनीत, किं नः सत्त्वानि पीडयसि। हंत, वर्धते संरम्भः। स्थाने खलु ऋषिजनेन सर्वदमन इति कृतनामधेयोऽसि ।

**द्वितीया तपस्विनी**—एषा खलु केसरिणी तवोपद्रवं करिष्यति यदि तस्याः पुत्रकं न मुञ्चसि ।

**बालः**—( सस्मितम् ) अहो, बलीयः खलु भीतोऽस्मि ।

**राजा**—किं नु खलु बालेऽस्मिन् स्निह्यति मे मनः ।

**प्रथमा**—वत्स, एनं बालमृगेन्द्रं मुञ्च। अपरं क्रीडनकं तुभ्यं यच्छामि।

**बालः**—कुत्र, यच्छ मे तत् ।

**द्वितीया**—सुव्रते, गच्छ त्वम्, मदीय उटजे मृत्तिकामयूरस्तिष्ठति तमस्योपहर ।

**प्रथमा**—तथा ( इति गच्छति )

**बालः**—( विहस्य ) अनेनैव तावत्क्रीडिष्यामि ।

EXERCISES.

( 1 )-Separate the following words :—

खल्वयं; दन्तांस्ते; तमस्योपहर ।

( 2 ) Change the voice of the following:—

( i ) स सिंहशिशुं बलात्कारेण कर्षति ।

( ii ) अपरं क्रीडनकं तुभ्यं यच्छामि ।

( 3 ) ( *a* ) Explain the peculiarities of :—

स्थाने; हंत; खलु.

( *b* ) Re-write the following sentences, using the words given in brackets in their proper forms :—

( i ) अस्मिन् ( बाल ) मे मनः ( स्निह् ).

( ii ) तपस्विनी क्रीडनकं ( सर्वदमन ) ( दा ).

चापलं A rash act. प्रकृतिः Natural disposition. जृम्भ् ( जृम्भते ) to open. अविनीत Rude. संरम्भः Turbulence. स्थाने Properly. केसरिणी A lioness. स्निह् To feel affection for. क्रीडनकः-कं A toy. उटजः A hut. मयूरः A peacock.

## १७. जरासंधजन्मवृत्तान्तः ।

### ( प्रथमो भागः )

आसीत्पुरा बृहद्रथो नाम मगधाधिपतिः । तस्य द्वे भार्ये आस्ताम् । किंतु प्रजाहीनश्चासौ राजा । एकदा महात्मनो गौतमस्य पुत्रश्चण्डकौशिको नाम यदृच्छयाऽऽगत इत्यशृणोत् । ततः स राजा पत्नीभ्यां सह तमुपागम्य पर्यतोषयत् । परितुष्टोऽसौ सत्यवागृषिस्तं नृपमवदत् । हे राजेन्द्र, परितुष्टोऽस्मि, वरं वरयेति । तदा स नृपतिरभाषत । भगवन्, किं संततिरहितस्य मे वरेण, राज्यमुत्सृज्य तपोवनाय प्रस्थितोऽहमिति ।



तच्छ्रुत्वाऽऽम्रवृक्षस्यच्छायायां समुपविष्टोऽसौ मुनिर्ध्यानपरोऽभवत् । तदा तस्योपविष्टस्य मुनेरुत्संगे न्यपतदेकमाम्रफलम् । तद्गृहीत्वा मुनिश्रेष्ठो राज्ञे दत्त्वावदच्च । गच्छ राजन्कृतार्थोऽसि, अधुना निवर्तस्व नराधिपेति ।

### EXERCISES.

( 1 ) Separate the following :—

प्रजाहीनश्चासौ; यदृच्छयाऽऽगतः; सत्यवागृषिस्तं; वरयेति; नृपतिरभाषत; तच्छ्रुत्वाऽऽम्रवृक्षस्य; दत्त्वावदच्च ।

( 2 ) Fill in the blanks :—

( i ) तस्य द्वे — आस्ताम्।

(ii) किंतु — चासौ राजा।

( 3 ) Explain the following :—

भार्ये आस्ताम्। पत्नीभ्यां सह। किं मे वरेण। राज्ञे दत्त्वा।

संततिरहितः, प्रजाहीनः Having no issue. यदृच्छया By chance. पर्यतोषयत् Satisfied. सत्यवाक् A truth-speaker. वरः A boon. ध्यानपरः Absorbed in meditation. उत्संगः A lap. कृतार्थ Having gained one's object.

---

## १८. जरासंधजन्मवृत्तान्तः।

### ( द्वितीयो भागः )

मुनेर्वाक्यं श्रुत्वा स नृपः स्वगृहं गतः। तत्फलं च द्वाभ्यां पत्नीभ्यां स प्रायच्छत्। ते तदाम्रफलं द्विधा कृत्वाऽभक्षयताम्। तत्फलभक्षणात्तयोर्गर्भः समभवत्। श्रुत्वा च तत्स नृपतिः परं सुखमलभत। अथ गच्छता कालेन ते उभे शरीरशकले प्राजायेताम्। तदवलोक्य खिन्ने ते भगिन्यौ तच्छकले अत्यजताम्। तयोर्धात्र्यौ ते गृहीत्वा रथ्यायामत्यजताम्। ते च शकले जरा नाम राक्षसी प्रगृह्य समयोजयत्। समानीतमात्रे तु ते एकमूर्तिधरो वीरः कुमारः समपद्यत।

सा तु राक्षसी तं बालमुपादाय राजानं च गत्वाभाषत। हे बृहद्रथ, प्रगृह्यतामसौ तव सुतः। तव पत्नीद्वये जातः किंतु धात्रीजनेन रथ्यायां परित्यक्तोऽसौ। स च मया परिरक्षित इति।

राजाऽपि तं कुमारं संगृह्य प्रीतः प्राविशद्गृहम् । तस्य बालस्य यत्कृत्यं तत्सर्वं स तदाकरोत् । जरया संधितोऽसौ जरासन्ध इति तस्य नामाकरोत् ।

EXERCISES.

(1) Separate the following words :—
तदाम्रफलम्; तच्छकले; प्राविशद्गृहम्.

(2) Fill in the blanks :—
(i) श्रुत्वा च तत्स — परं — अलभत ।
(ii) ते च शकले जरा — राक्षसी प्रगृह्य — ।

(3) Explain the following forms :—
श्रुत्वा; प्राजायेताम्; प्रगृह्य; समपद्यत; उपादाय; प्रगृह्यताम्; संधितः ।

(4) Q. कथं जरासन्धस्तन्नाम लब्धवान् ।

द्विधा कृत्वा Cutting into two parts. गर्भः A fœtus. गच्छता कालेन In course of time. शकलः-लं A piece. समयोजयत् Joined together. समानीत Brought together. एकमूर्तिधरः Bearing one complete body. द्वयं (द्वितयं, द्विकं) A collection of two. धात्री A nurse. संधित Joined together.

---

## १९. लवचन्द्रकेतुसंवादः ।

(ततः प्रविशति सुमन्त्रसारथिना सह चन्द्रकेतुः)

**चन्द्रकेतुः**—आर्य सुमन्त्र, पश्य । कोऽयं बालवीरो योऽस्माकं सैन्यानामुपरि शरवृष्टिं करोति ।

**सुमन्त्रः**—आयुष्मन् । लव इति दूतैः कथितम्

**चन्द्र०**—भो भो लव महाबाहो । किं तवैतैः सैनिकैः । एहि, एष तिष्ठाम्यहमत्र पुनर्युद्धाय ।

**सुमन्त्रः**—( स्वगतम् ) कथमीदृशेन वीरेण सह वत्सस्य चन्द्रकेतोर्युद्ध-मनुजानीमः। अथवा, उपस्थिते युद्धे किं कुर्मः । ( प्रकाशम् ) कुमार, पश्य । प्रतिनिवृत्त एष वीरः ।

( ततः प्रविशति लवः )

**कुमारौ**—( अन्योन्यं प्रति ) अहो प्रियदर्शनः कुमारः ।

**लवः**—( चन्द्रकेतुमवलोक्य, स्वगतम् ) एनं दृष्ट्वा कामप्यवस्थामनुभवाम्यु-हम् । यथा चन्द्रस्योदये कुमुदं विकसति तथैवामुं विलोक्य मम दृष्टिरानन्दं गच्छति । किंतु ममायं बाहुः पुनर्युद्धाय स्फुरत्येव ।

**चन्द्र०**—आर्य, अयमसौ चन्द्रकेतुरभिवादयते ।

**सुमन्त्रः**—वत्स, यदि त्वां राजा रामभद्रः पश्येत्तदा तस्य हृदयं स्नेहेनार्द्रं भवेत् ।

**लवः**—सुजनः स राजर्षिः श्रूयते । सर्वे जनास्तं बहु मन्यन्ते । किंतु भवतामश्वस्य रक्षकाणां वचनानि मम कोपं जनयन्ति ।

**चन्द्र०**—किं न सहते भवान् मे तातस्य प्रतापम् ।

**लवः**—अस्त्वेव तत् । ननु पृच्छामि चन्द्रकेतो किं शौर्यमेकस्मिन्नेव पुरुषे तिष्ठति ।

**सुमन्त्रः**—नैव खलु जानासि देवं रामभद्रम् । अत एवं वदसि । तेन रामभद्रेण युद्धे पराजितः परशुरामः । अपि श्रुतमेतद्भवता ।

**लवः**—( विहस्य ) आर्य, जामदग्न्यः पराभूत इति किमर्थं स्तूयतेऽसौ। शृणु, द्विजानां वीर्यं वाण्यामेवास्ति। किंतु क्षत्रियाणां वीर्यं बाह्वोरेव वर्तते। शस्त्रं धारयन् ब्राह्मणो युद्धे पराजित इति कां स्तुतिमर्हति स नृपः।

**चन्द्र०**—आर्य सुमन्त्र, कोऽयं बालो यो भृगुनन्दनं वीरं न गणयति। न हि जानाति तातचरितमपि।

**लवः**—को हि रघुपतेश्चरितं महिमानं च न जानाति। ताटकाया वधं कृत्वा महती कीर्तिर्येन लब्धा। कथं तेन खरो नाम राक्षसो निषूदितस्तत्प्रसिद्धमेव। वालिवधे यत्कौशलं तेन दर्शितं तदपि प्रख्यातमस्ति लोके।

**चन्द्र०**—आः, अति हि नाम प्रगल्भसे। तातमप्यधिक्षिपसि।

**लवः**—( स्वगतम् ) अये, मयि क्रुद्धोऽसौ जातः। ( प्रकाशम् ) कुमार, एहि। युद्धभूमिमेव गच्छावः।

( इति गच्छन्ति सर्वे )

Note — A dialogue for boys to act.

अनु–ज्ञा To allow. प्रियदर्शन Beautiful. काऽप्यवस्था An indescribable state. अधि–क्षिप् To censure.

---

## २०, संकीर्णश्लोकाः।

लोभेन बुद्धिश्चलति लोभो जनयते तृषाम्।
तृषार्तो दुःखमाप्नोति परत्रेह च मानवः॥ १॥

यो ध्रुवाणि परित्यज्य अध्रुवाणि निषेवते।
ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव च॥ २॥

जलबिन्दुनिपातेन क्रमशः पूर्यते घटः ।
स हेतुः सर्वविद्यानां धर्मस्य च धनस्य च ॥ ३ ॥
दानोपभोगरहिता दिवसा यस्य यान्ति वै ।
स कर्मकारभस्त्रेव श्वसन्नपि न जीवति ॥ ४ ॥
उदये सविता रक्तो रक्तश्चास्तमने तथा ।
संपत्तौ च विपत्तौ च साधूनामेकरूपता ॥ ५ ॥
दुर्जनः परिहर्तव्यो विद्ययालंकृतोऽपि सन् ।
मणिना भूषितः सर्पः किमसौ न भयंकरः ॥ ६ ॥
मनस्यन्यद्वचस्यन्यत्कार्यमन्यद्दुरात्मनाम् ।
मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम् ॥ ७ ॥
काव्यशास्त्रविनोदेन कालो गच्छति धीमताम् ।
व्यसनेन च मूर्खाणां निद्रया कलहेन वा ॥ ८ ॥

चलति Goes astray. तृषा Desire. परत्र In the next world. ध्रुवाणि Things which are certain (which are in one's hand). अध्रुवाणि Things which are uncertain, i. e. not in one's hand. क्रमशः Gradually. श्वसन्नपि Although breathing. कर्मकारभस्त्रा A bellow of a blacksmith. व्यसनम् A bad habit. रक्त Red. एकरूपता Uniformity of character. परिहर्तव्य Should be avoided. मन० One thing in mind, another in speech and a third in act. विनोदः An amusement. धीमत् A talented man.

## २१. शकुन्तलाजन्मवृत्तान्तः ।

**राजा दुष्यन्तः**—वयं तावद्भवत्योः सखीगतं किमपि पृच्छामः ।

**सख्यौ**—अनुग्रह एवेयमभ्यर्थना ।




**राजा**—भगवान्काश्यपोऽविवाहित इति प्रसिद्धम् । इयं च युवयोः सखी शकुन्तला तस्यात्मजेति कथमेतत् ।

**अनसूया**—शृणोत्वार्यः । अस्ति कोऽपि कौशिक इति महाप्रभावो राजर्षिः ।

**राजा**—अस्ति । श्रूयते ।

**अनसूया**—तमावयोः प्रियसख्याः पितरमवगच्छ । परित्यक्तायाः शरीरसंवर्धनादिभिस्तातकाश्यपोऽस्याः पिता ।

**राजा**—परित्यक्तशब्देन जनितं मे कौतूहलम् । आमूलाच्छ्रोतुमिच्छामि ।

**अनसूया**—शृणोत्वार्यः । गौतमीतीरे पुरा किल स राजर्षिरुग्रं तप

आचरत्। तदा तस्य मनः प्रलोभयितुं भीतैर्देवैर्मेनका नामाप्सराः प्रेषिता। तस्यामियं जाता।

**राजा**—सर्वथाप्सरःसंभवैषा।

EXERCISES.

( 1 ) Separate the following words :—
आमूलाच्छ्रोतुमिच्छामि; शृणोत्वार्यः ; राजर्षिरुग्रम्।

( 2 ) Explain the peculiarities :—
वयं पृच्छामः। आमूलात्। किल।

( 3 ) Q. कथ्यतां शकुन्तलायाः जन्मवृत्तान्तः संस्कृतभाषायाम्।

अनुग्रहः A favour. अविवाहितः A bachelor. आत्मजा A daughter. शरीरसंवर्धनं Nourishment of the body. कौतूहलं Curiosity. आमूलात् From the beginning. उग्र Austere. प्रलोभयितुम् To attract.

---

## २२. सुभद्राहरणम्

एकदा रैवतकपर्वते परिभ्रमन्तौ वासुदेवः पार्थश्च वसुदेवसुतां शुभामलंकृतामपश्यताम्। दृष्ट्वैव तामर्जुनस्य हृदयेऽनुरागः समजायत। तदवलोक्य कृष्णोऽवदत्। पार्थ, ममैषा भगिनी सुभद्रा नाम पितुर्मे दयिता सुता। यदि तव मनसि वर्तते तर्हि कथयामि पितरं स्वयमिति।

तदार्जुनेन भणितम्। यदि ते स्वसा मम महिषी भवेत्तर्हि मम सर्वं कल्याणं कृतं भवेत्। हे जनार्दन, अस्याः प्राप्तौ क उपायः स्यात्तं कथय मामिति।

तदाभिहितं वासुदेवेन। कौन्तेय, स्वयंवरः क्षत्रियाणां विवाह एव। किंतु स संशयितः। बलेन हरणं शूराणां क्षत्रियाणां प्रशस्यते। अतस्त्वमर्जुन! मम कल्याणीं भगिनीं प्रसह्य हरेति।




ततो रैवतके गतां कन्यां विदित्वा धनञ्जयो रथमादाय प्रायात्। सुभद्रा तु शैलेन्द्रं सर्वाणि च दैवतान्यभ्यर्च्य गिरेः प्रदक्षिणं च कृत्वा द्वारकां प्रति प्रातिष्ठत। तामुपसृत्य कौन्तेयः बलादारोपयद्रथम्। तां चारुसर्वाङ्गीं शुचिस्मितां च सुभद्रामादाय स पुरुषव्याघ्रो रथेन स्वपुरं प्रति प्रायात्।

EXERCISES.

(1) Separate the following words :—

दृष्ट्वैव; ममैषा; हरेति; दैवतान्यभ्यर्च्य।

(2) Re-write the following sentences, using the words given in brackets in their proper forms :—

(i) सुभद्रा (द्वारका) प्रति (प्र-स्था Imperf.).

(3) Change the voice of the following :—

(i) परिभ्रमन्तौ वासुदेवः पार्थश्च वसुदेवसुतामपश्यताम् ।

(ii) तदाभिहितं वासुदेवेन ।

(iii) तां कौन्तेयो रथमारोपयत् ।

(4) Explain clearly the following words :—
स्वयंवरः, शैलेन्द्रः, चारुसर्वाङ्गी, शुचिस्मिता, पुरुषव्याघ्रः ।

(5) Q. कथं सुभद्रापहृतार्जुनेन तद्वर्ण्यताम् ।

दयिता Dear. महिषी A crowned queen. संशयित Doubtful. प्रसह्य By force. प्रशस्यते Is better. पुरुषव्याघ्रः An excellent person.

---

## २३, संकीर्णश्लोकाः ।

न संशयमनारुह्य नरो भद्राणि पश्यति ।
संशयं पुनरारुह्य यदि जीवति पश्यति ॥ १ ॥

अल्पानामपि वस्तूनां संहतिः कार्यसाधिका ।
तृणैर्गुणत्वमापन्नैर्बध्यन्ते मत्तदन्तिनः ॥ २ ॥

नाभिषेको न संस्कारः सिंहस्य क्रियते मृगैः ।
विक्रमार्जितराज्यस्य स्वयमेव मृगेन्द्रता ॥ ३ ॥

स्थान एव नियोज्यन्ते भृत्याश्चाभरणानि च ।
न हि चूडामणिः पादे नूपुरं मूर्ध्नि धार्यते ॥ ४ ॥

क्षमा शत्रौ च मित्रे च यतीनामेव भूषणम् ।
अपराधिषु सत्त्वेषु नृपाणां सैव दूषणम् ॥ ५ ॥

यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् ।
लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ॥ ६ ॥
सत्यं शौर्यं दया त्यागो नृपस्यैते महागुणाः ।
एतैस्त्यक्तो महीपालः प्राप्नोति खलु वाच्यताम् ॥ ७ ॥
लालयेत्पञ्च वर्षाणि दश वर्षाणि ताडयेत् ।
प्राप्ते तु षोडशे वर्षे पुत्रे मित्रवदाचरेत् ॥ ८ ॥

संशयमनारुह्य Without running a risk. भद्रम् Welfare. संहतिः Union. कार्यसाधिका Accomplishes the desired object. गुणत्वमापन्न Turned into a rope. मत्तदन्तिन् An intoxicated elephant. अभिषेकः Coronation ceremony. संस्कारः A sacred rite. मृगेन्द्रता Sovereignty over the beasts. विक्रमार्जित-राज्यम् A kingdom acquired by valour. स्थाने नियोज्यन्ते Set on the proper places. चूडामणिः A crest jewel. नूपुरं An anklet. लोचनाभ्यां विहीन One who is blind. दर्पणः A mirror. त्यागः Charity. वाच्यता Censure. लालयेत् 3rd Pers. sing. Pot. of लल् 10th conj. or causal ( लालयति–ते To fondle ).

---

## २४. सुन्दोपसुन्दकथा ।

### ( प्रथमो भागः )

पुरा निकुम्भो नाम बलवान्दैत्येन्द्रोऽभवत् । तस्यास्तां भीमपराक्रमौ द्वौ पुत्रौ सुन्दोपसुन्दौ नाम । त्रैलोक्यविजयार्थाय तावुग्रं तपोऽतपताम् । तयोस्तपसा तुष्टः पितामहस्तावभिगम्य वरं वृणुतमित्यभाषत । ताववदताम् ।

त्रिषु लोकेषु कस्मादपि नौ भयमन्योन्यमृते न स्यादिति। यत्प्रार्थितं तद्यच्छामि वामित्युक्तं ब्रह्मणा। वरं लब्ध्वा तौ भ्रातरौ स्वमेव भवनं गतौ।

ततस्तौ क्रूरौ सर्वां महीं पीडयितुमारब्धौ। आश्रमा भग्ना ऋषयो हता एवं च जगत्सर्वं शून्यमभवत्। तदा देवर्षयो महर्षयश्च सर्वे सुन्दोपसुन्दयोस्तत्कर्म दृष्ट्वा परमदुःखिताः पितामहस्य भवनमभ्यगच्छन्। सुन्दोपसुन्दयोः सर्वं कर्म च तस्मै ते न्यवेदयन्।

## EXERCISES.

(1) Note the uses of भयम् and ऋते in the following sentences :—

(i) कस्मादपि भयम् etc.

(ii) अन्योन्यमृते।

(2) Fill in the blanks :—

(i) तौ — तपः —।

(ii) — तुष्टः पितामहः — वृणुतमिति —।

(iii) आश्रमाः — — हता एवं च जगत्सर्वं — अभवत्।

(3) Change the voice of the following :—

(i) तावुग्रं तपोऽतपताम्।

(ii) तदा देवर्षयस्तयोः सर्वं कर्म तस्मै न्यवेदयन्।

उग्र Austere. पितामहः The God Brahmá.
ऋते Except. शून्य Lonely.

# २५. सुन्दोपसुन्दकथा ।

## ( द्वितीयो भागः )



सर्वेषां तद्वचः श्रुत्वा पितामहो मुहूर्तमिव विचिन्त्य विश्वकर्माणमाह्वयत् । सृज्यतां लावण्यवत्येका प्रमदेति तं समादिशत् । तेन महता प्रयत्नेन रूपेणाप्रतिमा नारी निर्मिता । पितामहस्तिलोत्तमेति तस्या नामाकरोत् । अवदच्च तिलोत्तमे, गच्छ सुन्दोपसुन्दाभ्याम्, ताभ्यामन्योन्येन यथा वैरं स्यात्तथा कुर्विति । तथेति प्रतिज्ञाय पितामहं नमस्कृत्य च सा गता । सा शनैरगच्छत्तं देशं यत्रास्तां तौ महासुरौ । तस्याः सौंदर्यं दृष्ट्वैव तौ व्यथितौ समभवताम् । सुन्दस्तां दक्षिणेन करेणागृह्णादुपसुन्दस्तु वामेन पाणिना । इयं मम भार्येति सुन्दोऽभ्यभाषत । ममैव सेत्युपसुन्दोऽवदत् । नैषा तव ममैषेति तौ तस्या रूपेण सम्मत्तौ गदे प्रगृह्यान्योन्यं न्यहताम् । गदाभिहतौ तौ धरणीतले न्यपतताम् ।

EXERCISES.

(1) Change the voice of the following :—

(i) पितामहो विश्वकर्माणमाह्वयत् ।

(ii) तेन नारी निर्मिता ।

(2) Explain the following forms :—

नमस्कृत्य, प्रतिज्ञाय, पाणिना, न्यपतताम्.

(3) Q. संक्षेपेण लिख्यतां सुन्दोपसुन्दकथा ।

विश्वकर्मन् A name of the architect of Gods. अप्रतिम Matchless. वैरम् Enmity. गदा A mace.

---

## २६. चित्रफलकदर्शनजः संतापः देव्याः ।

( विदूषको बाहू प्रसार्य नृत्यति । नृत्यतस्तस्य कक्षान्तरात्फलकः पतति । )

**काञ्चनमाला**—( फलकं गृहीत्वा निरूप्यापवार्य ) भर्त्रि, प्रेक्षस्व तावत्किमत्र चित्रफलक आलिखितम् ।

**वासवदत्ता**—( निरूप्यापवार्य ) काञ्चनमाले, अयमार्यपुत्रः । इयं पुनः सागरिका । किं न्वेतत् ।

**कांचन०**—भर्त्रि, अहमप्येतदेव चिन्तयामि ।

**वासव०**—( सकोपम् ) आर्यपुत्र, केनेदमालिखितम् ।

**राजा**—( अपवार्य ) वयस्य, किं ब्रवीमि ।

**विदू०**—( अपवार्य) भो मा चिन्तय । अहमुत्तरं यच्छामि। (प्रकाशं वासवदत्तां प्रति ) भवति, मान्यथा संभावय । प्रियवयस्येनैतदालेख्यचातुर्यं दर्शितम् ।

**राजा**—यथाह वसन्तकस्तथैवैतत् ।

**वासव०**—( फलकं निर्दिश्य ) आर्यपुत्र, एषाऽपि याऽपरा तत्र समीप आलिखिता तत्किमार्यवसन्तकस्य नैपुण्यम् ।

**राजा**—देवि, अलमन्यथा शङ्कया । इयं हि कापि कन्यका स्वहृदयेनैव परिकल्प्यालिखिता । न तु पूर्वं दृष्टा ।

**विदू०**—भवति, सत्यं सत्यम् । शपे ब्रह्मसूत्रेण यदीदृशी कदाप्यस्माभिर्दृष्टपूर्वा ।

**वासव०**—आर्यपुत्र, मम पुनरेतच्चित्रफलकं प्रेक्षमाणायाः शीर्षवेदना समुत्पन्ना । तद्गच्छाम्यहम् । ( प्रस्थिता )

## EXERCISES.

(1) Explain the following sandhis :—
चित्रफलक आलिखितम्; समीप आलिखितम्.

(2) Explain the following forms :—
प्रसार्य, निरूप्य, अपवार्य, गृहीत्वा, भवति, परिकल्प्य, प्रेक्षमाणायाः, समुत्पन्ना, प्रस्थिता.

(3) Write a grammatical note on :—
अल शङ्कया; शपे ब्रह्मसूत्रेण.

हस्तौ प्रसार्य Having stretched forth hands. कक्षान्तर An arm-pit. चित्रफलकः A picture-board. आलिखित Painted, drawn. आलेख्यचातुर्य Skill in drawing. शपे ब्रह्मसूत्रेण (1) swear by the sacred thread. शीर्षवेदना Headache.

# २७. लङ्कादहनम् ।

स्वभ्रातुर्बिभीषणस्य वचनं श्रुत्वा दशग्रीव इदं वचनमब्रवीत् । सम्यगुक्तं हि भवता । दूतवधः खलु निंद्यः । अतोऽस्य कपेर्वधायान्य उपायोऽवश्यं क्रियताम् । कपीनां किल लाङ्गूलमिष्टं भवति भूषणम् । तदस्य दीप्यतां शीघ्रम् । तेन दग्धेनासौ वानरो गच्छतु । तस्य सर्वे बांधवाः सुहृज्जनाश्च दीनमङ्गवैरूप्यकर्शितं तं पश्यन्त्विति ।




तस्य तद्वचनं श्रुत्वा राक्षसाः क्रोधाभिभूतास्तस्य लाङ्गूलं जीर्णैः कार्पासिकैः पटैर्वेष्टन्ते स्म । तैलेन परिषिच्याथ तेऽग्निं तत्रोदपादयन् । ततस्ते राक्षसा हृष्टाः कपिकुञ्जरं परिगृह्य प्रागच्छन् ।

दह्यमाने च लाङ्गूले स वानरोऽचिन्तयत् । प्रदीप्तोऽग्निरयं कस्मान्न मां दहति । अथवा, राघवस्य तेजसा पितुश्च मम सख्येनासौ पावको न मां दहतीति । पुनश्च कथमस्य बन्धनस्येहैव प्रतिक्रिया युक्ता भवेत् । इति पुनर्विचिन्त्य स महाकपिः पाशांश्छित्त्वा वेगेनोदुपतत् ।

ततोऽसौ प्रदीप्तलाङ्गूलो लङ्कायां भवनाग्रेषु विचरितुं प्राक्रमत। विचरता तेन तेषु तेषु गृहेषु अग्निर्विनिक्षिप्तः। एवं तेन कपिकुञ्जरेण रावणकुम्भकर्णादीनां, बिभीषणगृहं वर्जयित्वा, सर्वेषां राक्षसानां महार्हाणि भवनानि दग्धानि। समस्तां लङ्कां प्रदह्य स महाकपिर्लाङ्गूलाग्निं समुद्रे निरवापयत्।

EXERCISES.

(1) Explain the forms :—

श्रुत्वा, उक्त, दीप्यताम्, दग्ध, जीर्ण, हृष्ट, परिगृह्य, छित्त्वा, निरवापयत्.

(2) Write notes on :—

तेषु तेषु गृहेषु; कपिकुञ्जरः.

सम्यक् Properly. दूतवधः Killing of a messenger. इष्टं भूषणं A dear ornament. दीप्यतां Let it be set on fire. अङ्गवैरूप्यकर्शित With the body deformed. जीर्ण Torn. कार्पासिकः पटः A piece of cotton cloth. परिषिच्य तैलेन Soaked in oil. हृष्ट Delighted. कपिकुञ्जरः An excellent monkey. प्रतिक्रिया Retaliation. पाशः A bond. अग्निं विनिक्षिप्य Having set fire to. महार्ह Costly. निरवापयत् Quenched.

---

## २८. नायकस्यौदार्यम्।

**वृद्धा**—हा पुत्रक, वासुकिना परित्यक्तोऽसि। कस्तेऽपरः रक्षणं करिष्यति।

**नायकः**—( सत्वरमुपसृत्य ) नन्वहमहम्। अम्ब, नन्वहं विद्याधरस्तव पुत्ररक्षणार्थमेवागतः। अतस्त्वं धीरा भव।

**वृद्धा**—पुत्रक, पुनरप्येतान्यक्षराणि भण ।

**नायकः**—किं पुनरभिहितेन । ननु कर्मणैव संपादयामि ।

**वृद्धा**—पुत्रक, चिरं जीव ।

**नायकः**—अम्ब, प्रत्यर्पय मम वध्यचिह्नम् । एतत्प्रावृत्य ते पुत्रस्य जीवितरक्षणार्थं विनतासुताय स्वदेहमाहारयितुं यच्छामि ।

**शङ्खचूडः**—अहो, जगद्विपरीतमस्य महासत्त्वस्य चेतः । यदर्थमयं तार्क्ष्यः प्रतिदिनं नागानत्ति तानेव प्राणान्परार्थे तृणमिव त्यजति । ( नायकमुद्दिश्य ) भो महात्मन्, दर्शिता खलु त्वयाऽऽत्मप्राणप्रदानव्यसनायेन मयि दयालुता । तदलं निर्बन्धेन ।

**नायकः**—कुमार शङ्खचूड, परहितं साधयितुं प्रयतमानं किमवरुणत्सि माम् । प्रसीद, दीयतां मे वध्यचिह्नम् ।

**शङ्ख०**—किं वृथा प्रयासेन । अथानुकम्पनीया वयं तदियं माता न परित्यजति जीवितं तथाभ्युपायश्चिन्त्यताम् ।

**नायकः**—ननु चिन्तित एवोपायः । स च त्वदधीनः ।

**शङ्ख०**—क इव ।

**नायकः**—यदि जीवन्तीं मातरमिच्छसि तद्रक्षात्मानं ममासुभिः । अयमेवोपायः । तदर्पय वध्यचिह्नम् ।

( ततः प्रविशति सह वाससा कञ्चुकी )

**कंचु०**—इदं रक्तांशुकयुगलं देव्या प्रेषितम् । तदेतत्परिधत्तां कुमारः ।

**नायकः**—( गृहीत्वा ) दिष्टया सिद्धो मे मनोरथः। एतत्परिधाय गरुडागमनसमयं प्रतिपालयन्निमां वध्यशिलामारुह्य तिष्ठामि। ( तथा करोति )

EXERCISES.

( 1 ) Separate the following words :—
नन्वहम्; पुनरप्येतान्यक्षराणि; कर्मणैव; अभ्युपायश्चिन्त्यताम्; प्रतिपालयन्निमाम्.

( 2 ) Re-write the following sentences, using the words given in brackets in their proper forms :—

( i ) किं वृथा ( प्रयास ).
( ii ) तदलं ( निर्बन्ध ).
( iii ) तद्रक्षात्मानं मम ( असु ).

नायकः A hero. वासुकिः Name of the king of snakes. अम्ब Voc. sing. of अम्बा, A mother. विद्याधर A class of demi-gods. वध्यचिह्नम् A token of a victim. विनतासुतः Garuda. विपरीत Contrary. महासत्त्वः A noble-minded person. तार्क्ष्यः A name of Garuda. नागः A snake. निर्बन्धः Persistence. परहितं The welfare of others. अव–रुध् To prevent. अनुकम्पनीय Fit to be pitied. त्वदधीनः Depending on you. युगलं A pair. दिष्ट्या A particle meaning 'Joy.' प्रतिपालयन् Waiting for. वध्यशिला A slab of stone on which people are killed.

---

## २९. संकीर्णश्लोकाः।

सर्वद्रव्येषु विद्यैव द्रव्यमाहुरनुत्तमम्।
अहार्यत्वादनर्घ्यत्वादक्षयत्वाच्च सर्वदा ॥ १ ॥
विद्या शस्त्रस्य शास्त्रस्य द्वे विद्ये प्रतिपत्तये।
आद्या हास्याय वृद्धत्वे द्वितीयाद्रियते सदा ॥ २ ॥
यौवनं धनसंपत्तिः प्रभुत्वमविवेकिता।
एकैकमप्यनर्थाय किमु यत्र चतुष्टयम् ॥ ३ ॥
अजातमृतमूर्खाणां वरमाद्यौ न चान्तिमः।
सकृद्दुःखकरावाद्यावन्तिमस्तु पदे पदे ॥ ४ ॥
छायामन्यस्य कुर्वन्ति तिष्ठन्ति स्वयमातपे।
फलान्यपि परार्थाय वृक्षाः सत्पुरुषा इव ॥ ५ ॥
शैले शैले न माणिक्यं मौक्तिकं न गजे गजे।
साधवो न हि सर्वत्र चंदनं न वने वने ॥ ६ ॥
जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ ७ ॥
स्नेहं दयां च सौख्यं च यदि वा जानकीमपि।
आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा ॥ ८ ॥
यो हनिष्यति वध्यं त्वां रक्ष्यं रक्षति च द्विजम्।
हंसो हि क्षीरमादत्ते तन्मिश्रा वर्जयत्यपः ॥ ९ ॥
चिन्तनीया हि विपदामादावेव प्रतिक्रियाः।
न कूपखननं युक्तं प्रदीप्ते वह्निना गृहे ॥ १० ॥
अतिदर्पे हता लंका अतिमाने च कौरवाः।
अतिदाने बलिर्बद्धः सर्वमत्यन्तगर्हितम् ॥ ११ ॥

अनुत्तम The best. अहा०–त्वं On account of the incapability of being taken away, valued or exhausted. प्रतिपत्तिः Fame. आद्रियते ( आ–दृ Pass. ) Is respected. प्रभुत्वं Sovereignty. अविवेकिता Rashness. चतुष्टयम् A collection of four. अन्तिमः The last one. माणिक्यं A ruby. अपरिहार्य Unavoidable. आराधनं Pleasing. व्यथा Agony. (Ver. 9) यः refers to शरः An arrow. वध्य Fit to be killed. रक्ष्य Fit to be protected. क्षीरं Milk. आ–दा (Atm.) To receive. तन्मिश्राः ( Adj. to अपः ) Mixed with it. चिन्तनीय Should be thought of. प्रतिक्रिया A remedy. कूपखननं Digging of a well. युक्त Proper. अतिदर्पः Excessive pride. लङ्का *i. e.* लङ्कानाथः Ravana. दानं Charity. सर्वमत्यन्तगर्हितम् Extremes are always bad.

# संस्कृतकथासंग्रहः



## द्वितीयखंडः

---

### १. दक्षमखनाशः ।

एकदा भगवाञ्शंकरः पार्वतीं रहसि प्राह । देवि, पुरा दक्षप्रजापतेस्त्वं तथान्याश्च बह्वयः कन्यका जाताः । स मह्यं भवतीं प्रायच्छद्धर्मादिभ्यश्चापराः । कदाचित्तेन यज्ञे जामातरोऽखिला आहूताः । किंत्वहमेवैको वर्जितः । ततः स त्वयाऽपृच्छयत । किं न भर्ता ममाहूतस्त्वया तातोच्यतामिति । कपालमाली ते भर्ता कथमाहूयतां मखे । इत्यब्रवीत्स तदा । पापोऽयमस्माज्जातेन किं ममामुना देहेन । इति कोपात्परित्यक्तं शरीरं तत्प्रिये त्वया । स च दक्षयागस्तेन मन्युना मया नाशित इति ।

EXERCISES.

(1) Write notes on :—
मह्यं भवतीं प्रायच्छत् । किं ममामुना देहेन ।

(2) Change the voice of the following :—
(i) स त्वयापृच्छयत ।
(ii) किं न भर्ता ममाहूतस्त्वया ।

(3) Explain the following forms :—
प्राह, बह्वयः, भवतीं, आहूतः, नाशितः.

(4) (a) Give as many Sanskrit words as you can for ' a sacrifice. '

(b) State in your own words (in Sanskrit) why the sacrifice, performed by दक्ष, was destroyed by God Shiva.

रहसि In private. मखः A sacrifice. कपालः-लं The skull. कपालमालिन् An epithet of God Shiva. मन्युः Anger. नाशितः Destroyed.

---

## २. परपीडा न कर्तव्या ।

अथैकदा केचिद्बालकाः कासारस्य तटमुपगता जले च लीलया पाषाणान् प्रक्षेप्तुं प्रारभन्त ।

तेनान्तर्निवासिनो भेका अम्रियन्त । ततस्तेषामेकतमो वृद्धो दर्दुरो बहिरागत्याभाषत । बालाः, किमर्थं यूयमस्मासु शिलाः प्रक्षिपथ । तदावददेकः कुमारः । भो मण्डूक, वयमेतानुपलान् वारिणि निक्षिप्य क्रीडामः । ततः स दर्दुरः पुनरगदत् । दृषत्प्रक्षेपणं युष्माकं क्रीडा किंत्वस्माकं मरणमेव भवति । तदेतस्मात्खेलनाद्विरमतेति । एतदाकर्ण्य, 'साधूक्तमनेन मंडूकेन, तस्माद्गृहमेव गच्छामो वयमि'त्येकेन दारकेण तदा भाषितम् । तस्य वचनं श्रुत्वा सर्वे कुमाराः स्वगृहं प्रतिन्यवर्तन्त ।

### Exercises.

(1) Change the voice of the following sentences:-

(i) तदावददेकः कुमारः ।

(ii) साधूक्तमनेन मंडूकेन ।

(iii) एकेन दारकेण भाषितम् ।

(2) (a) Write a note on the following :—
खेलनाद्विरमत ।

(b) Mark the different words used in this lesson for :—

A boy, a frog, a stone.

(3) बालका लिख्यतां तात्पर्यमस्याः कथायाः ।

भेकः, दर्दुरः, मंडूकः A frog. पाषाणः, उपलः, शिला (*f*) दृषद् (*f*) A stone. वि–रम् (*p.*) to stop.

---

## ३. हनुमत्प्रत्ययार्थं सीता स्ववृत्तान्तं वर्णयति ।

उवाच वाक्यं वैदेही हनूमन्तं द्रुमाश्रितम् ।
स्नुषा दशरथस्याहं शत्रुसैन्यप्रणाशिनः ॥ १ ॥
दुहिता जनकस्याहं वैदेहस्य महात्मनः ।
सीतेति नाम्ना चोक्ताहं भार्या रामस्य धीमतः ॥ २ ॥
ततस्त्रयोदशे वर्षे राज्ये चेक्ष्वाकुनन्दनम् ।
अभिषेचयितुं राजा सोपाध्यायः प्रचक्रमे ॥ ३ ॥
तस्मिन्संभ्रियमाणे तु राघवस्याभिषेचने ।
कैकेयी नाम भर्तारमिदं वचनमब्रवीत् ॥ ४ ॥
न पिबेयं न खादेयं प्रत्यहं मम भोजनम् ।
एष मे जीवितस्यान्तो रामो यद्यभिषिच्यते ॥ ५ ॥
यत्तदुक्तं त्वया वाक्यं प्रीत्या नृपतिसत्तम ।
तच्चेन्न वितथं कार्यं वनं गच्छतु राघवः ॥ ६ ॥

स राजा सत्यवाग्देव्या वरदानमनुस्मरन् ।
मुमोह वचनं श्रुत्वा कैकेय्याः क्रूरमप्रियम् ॥ ७ ॥

ततस्तं स्थविरो राजा सत्यधर्मे व्यवस्थितः ।
ज्येष्ठं यशस्विनं पुत्रं रुदन्राज्यमयाचत ॥ ८ ॥

स विहायोत्तरीयाणि महार्हाणि महायशाः ।
विसृज्य मनसा राज्यं जनन्यै मां समादिशत् ॥ ९ ॥




साहं तस्याग्रतस्तूर्णं प्रस्थिता वनचारिणी ।
न हि मे तेन हीनाया वासः स्वर्गेऽपि रोचते ॥
प्रागेव तु महाभागः सौमित्रिर्मित्रनन्दनः ॥ १० ॥

ते वयं भर्तुरादेशं बहुमान्य दृढव्रताः ।
प्रविष्टाः स्म पुराऽदृष्टं वनं गम्भीरदर्शनम् ॥ ११ ॥

वसतो दण्डकारण्ये तस्याहममितौजसः ।
रक्षसापहृता भार्या रावणेन दुरात्मना ॥ १२ ॥

EXERCISES.

(1) Explain the following forms :—
संभ्रियमाणे, विहाय, प्रस्थिता, वनचारिणी, हीनायाः, बहुमान्य, अपहृता.

(2) Write notes on :—
सोपाध्यायः; वैदेही; सत्यवाक्; वासो न मे रोचते; सौमित्रिः; अमितौजाः; मित्रनन्दनः.

(3) Read this poem and answer the following questions in Sanskrit.

(i) What was the relation of Sita to दशरथ and जनक ?

(ii) Why did दशरथ grant the request of कैकेयी ?

प्रणाशिन् A slayer. धीमत् Talented. संभ्रियमाण Articles being collected. वितथं False. सत्यवाक् A truth-speaker. वरदानं A grant of a boon. सत्यधर्मे व्यवस्थित Abiding by truth. महार्हाणि उत्तरीयाणि Costly attire. समादिशत् Gave over to. तूर्णं Speedily. आदेशं बहुमान्य Abiding by the order of. पुराऽदृष्टं Not seen before. अमितौजस् One possessed of infinite lustre.

---

## ४. मंदमतिर्नारायणः।

अयि बाल, किं त्वां व्यथयति। इत्येकदा कयापि वृद्धया नारायणो नाम बालः पृष्टः। असौ कुमारः पुस्तकं हस्ते गृहीत्वा लोचनाद्दुःखाश्रूणि विमुञ्चन्गृहद्वारि निषण्ण आसीत्। तदा तेन दारकेण भणितम्। अम्ब,

एतत्काव्यं कंठस्थं कर्तुमस्मद्गुरुणा वयं सर्वे छात्रा आदिष्टाः। येन तदस्खलितं पठ्येत तस्मै पारितोषिकं देयमित्यभिहितं शिक्षकेण। एतत्कर्तुं सर्वथाऽक्षमोऽस्म्यत एव रुद्यते मया। इत्युक्ता साऽभाषत। कथमक्षमोऽसीति।

तदा तेन शिशुना निगदितम्। तत्काव्यमतिदीर्घं कठिनं च। अपि च, सर्वे मम वयस्या 'मन्दमतिर्नारायण' इत्युक्त्वा मामुपहसन्ति। एतन्निशम्य सा स्थविरा स्त्री सस्नेहमवदत्। भो वत्स, मन्दोऽसीति तेषां वचनमवगणय्य, सर्वथा दृढनिश्चयेन वर्तितव्यम्। तेन ध्रुवा सिद्धिर्भवेदिति।

भित्तिकामारोहन्तं कमपि शंबूकं स्वाङ्गुल्या निर्दिश्य सा पुनरभाषत, 'अवलोकयेमं कोषस्थम्। कथं स मन्दं मन्दं स्वमार्गमाक्रमति। अचिरादेव स भित्तिशिखरमारोहेत्। तथैव त्वया प्रयतितव्यं येनान्ते सफलोद्यमो भविष्यसि। यदा यदा च त्वं विगलितधैर्यो भविष्यसि तदा तदा मनसि चिन्तयेमं भित्तिमारोहन्तं शंबूकम्'। इत्यभिधाय सा जरठा गता।

तस्या उपदेशानुसारेण स्वपाठं पठितुं निश्चयः कृतस्तेन कुमारेण। अन्ते च स दिवसः संप्राप्तो यदा गुरुः सर्वान्कुमारांस्तत्काव्यं पठितुं क्रमशः आदिशत्। पञ्चषाणां कुमाराणां पठनानन्तरं नारायणस्य वारः समायातः। तस्मिन्नुत्थितमात्र एव सर्वे बालास्तत्स्खलनभीत्या प्रोच्चैर्व्यहसन्। किंतु नारायणेन स्तोकमपि प्रमादमकृत्वा स्वपाठः पठितः। तच्छ्रुत्वा, 'साधु नारायण साधु' इत्युक्त्वा गुरुणा प्रहृष्टेन मनसा तस्मै पारितोषिकं समर्पितम्।

अतो बालका मनस्यवधारयैतां संस्कृतोक्तिम्।

'मन्दोऽप्यविरतोद्योगः सदा विजयभाग्भवेदि'ति ॥

EXERCISES.

(1) (*a*) Write a note on the following constructions :—

( i ) अत एव रुद्यते मया ।

( ii ) तस्मिन्नुत्थितमात्र एव ।

(*b*) Change the voice of the following :—

( i ) कयापि वृद्धया बालः पृष्टः ।

( ii ) अवलोकयेमं कोशस्थम् ।

(2) (*a*) Prepare feminine forms of the following :– बाल, वृद्ध, कुमार, दारक, स्थविर, जरठ.

(*b*) Prepare Sanskrit words like 'सस्नेहम्' for the following :—

With pity; with politeness; with anger; with laugh; with respect.

(3) Write this story in Sanskrit in the form of a dialogue.

व्यथय ( Caus. of व्यथ् A. ) to pain. कंठस्थं कृ to learn by heart. अस्खलितम् Without a mistake. अवगणय्य Having disregarded. शंबूकः, कोशस्थः A snail. वारः A turn. प्रमादः A mistake.

---

## ५. संकीर्णश्लोकाः ।

निर्गुणेष्वपि सत्त्वेषु दयां कुर्वन्ति साधवः ।
न हि संहरते ज्योत्स्नां चंद्रश्चाण्डालवेश्मनः ॥ १ ॥

कुसुमस्तबकस्येव द्वे वृत्ती तु मनस्विनः ।
सर्वेषां मूर्ध्नि वा तिष्ठेद्विशीर्येत वनेऽथवा ॥ २ ॥

काय: संनिहितापाय: संपद: पदमापदाम् ।
समागमा: सापगमा: सर्वमुत्पादि भङ्गुरम् ॥ ३ ॥

विस्मय: सर्वथा हेय: प्रत्यूह: सर्वकर्मणाम् ।
तस्माद्विस्मयमुत्सृज्य साध्ये सिद्धिर्विधीयताम् ॥ ४ ॥

अरक्षितं तिष्ठति दैवरक्षितं
सुरक्षितं दैवहतं विनश्यति ।
जीवत्यनाथोऽपि वने विसर्जित:
कृतप्रयत्नोऽपि गृहे न जीवति ॥ ५ ॥

मौनान्मूर्ख: प्रवचनपटुर्वातुलो जल्पको वा
क्षान्त्या भीरुर्यदि न सहते प्रायशो नाभिजात: ।
धृष्ट:पार्श्वे वसति नियतं दूरतश्चाप्रगल्भ:
सेवाधर्म: परमगहनो योगिनामप्यगम्य: ॥ ६ ॥

लाङ्गूलचालनमधश्चरणावपातं
भूमौ निपत्य वदनोदरदर्शनं च ।
श्वा पिण्डदस्य कुरुते गजपुङ्गवस्तु
धीरं विलोकयति चाटुशतैश्च भुङ्क्ते ॥ ७ ॥

बलवानपि निस्तेजा: कस्य नाभिभवास्पदम् ।
नि:शङ्कं दीयते लोकै: पश्य भस्मचये पदम् ॥ ८ ॥

हीनसेवा न कर्तव्या कर्तव्यो महदाश्रय: ।
पयोऽपि शौण्डिकीहस्ते वारुणीत्यभिधीयते ॥ ९ ॥

य: स्वभावो हि यस्यास्ति स नित्यं दुरतिक्रम: ।
श्वा यदि क्रियते राजा तत्किं नाश्नात्युपानहम् ॥ १० ॥

निर्गुणाः Void of merits. संहरते Withdraws. वेश्मन् A house. वृत्तिः The course of action. मनस्विन् A wise man. सापगमाः Attended by separation. भङ्गुरम् Transitory. विस्मयः Perplexity of mind. प्रत्यूहः An obstacle. दैवहतं Struck by fate. वातुल Stupid. जल्पकः Talkative. अभिजातः Born of a noble family. धृष्ट Bold. अप्रगल्भ Shy. अगम्य Unknowable. चालनं Wagging. पिण्डदः A master. चाटुशतं A hundred of flattering words. अभिभवास्पदम् An object of insult. महदाश्रयः A shelter of great persons. शौण्डिकी A woman who sells liquor. वारुणी Wine. दुरतिक्रम Difficult to be changed. उपानह् A shoe.

## ६. हिरण्यकशिपुवृत्तान्तः।

(I)

आसीत्पुरा दैत्येन्द्रो हिरण्यकशिपुर्नाम। वीर्येणाप्रतिमः स जलधिं प्रविश्य तप उत्तममकरोत्। तस्य तपसा प्रीतमना ब्रह्मा स्वयमागम्य, प्रीतोऽस्मि ते तपसानेन, वरं वरय, भद्रं ते, यथेष्टं काममाप्नुहीति हिरण्यकशिपुमवदत्। तदा हिरण्यकशिपुनोक्तम्। देवसत्तम, न देवा न गन्धर्वा न मानुषा न केऽपि वा मां हन्युः। ऋषयो मां शापैर्न शपेयुः। न शस्त्रेण नास्त्रेण न केनापि वा मम वधो भवेत्। नाकाशे न भूमौ न रात्रौ न चापि वा दिवा स्याद्वधो मे। ददासि चेदेतान्वरान्वृणोम्यहमिति।

ततो ब्रह्मणाभिहितम्। एतान्वरान् प्राप्स्यसि त्वमसंशयम्। इत्युक्त्वा ब्रह्मा ब्रह्मलोकं गतः।




(II)

वरदानेन दर्पितो हिरण्यकशिपुर्दैत्यः सर्वाः प्रजाः पीडयितुं प्राक्रमत। त्रैलोक्यं वशमानीय न्यवसद्दानवो स्वर्गे।

तेन दैत्येन्द्रेणातिपीडिताः सुराः सर्वे पितामहं समासाद्य खिन्नाः प्राञ्जलयोऽब्रुवन्। भगवन्, त्रायस्व न इहागतान्, महद्भयं विद्यते नोऽस्मादसुरादिति।

ब्रह्माभाषत। मा भयं कार्यं युष्माभिः। भगवान् विष्णुस्तं हनिष्यत्येव। इति पितामहवचः श्रुत्वा ते सर्वे क्षीरोदधिं प्रति गता देवेशमब्रुवंश्च। भगवन्, त्रायस्वास्मानद्य हिरण्यकशिपोर्वधात्। हे सुरोत्तम, वयं त्वां शरणमागता इति।

देवानां वचः श्रुत्वा विष्णुर्वक्तुं प्राक्रमत। भयं त्यजतामरा अभयं वो ददाम्यहम्। वरदानेन गर्वितं दानवेन्द्रं निहन्म्यहम्। तस्माद्विबुधाः, स्वस्थानं

गच्छत । एवमुक्त्वा भगवान्नरस्यार्धतनुर्भूत्वा सिंहस्यार्धतनुः पुनर्भीमरूपो हिरण्यकशिपुं गतः ।

ततस्तेन दैत्येन सह युद्धं कृत्वा हरिः सन्ध्याकाले तं दैत्येन्द्रं खरैर्नखैरभिनत् । एवं च तं महाबलं दैत्यश्रेष्ठं न्यषूदयत ।

EXERCISES.

(1) (*a*) Explain the following forms :—

हन्युः; अभिहितम्; दर्पितः; समासाद्य; खिन्न; त्रायस्व.

(*b*) Give Sanskrit words for :—

A God; a demon.

(2) Q. कीदृशो वरस्तेन राक्षसेन्द्रेण याचितः। केन कथं च स दानवो निषूदितः ।

अप्रतिम Matchless. दर्पित Puffed up. प्राञ्जलयः With hands folded. खर Sharp.

---

## ७. शिष्यपरीक्षा ।

### ( प्रथमच्छेदः )

एकदा द्रोणाचार्यः कौरवपाण्डवानां धनुर्विद्यायां कौशलं परीक्षितुं तान्सर्वविद्याशास्त्रशिक्षितान्सर्वान् समानयत् । शिल्पिभिः कृतं कृत्रिमं भासं वृक्षाग्रे कुमाराणामविज्ञातमारोप्य लक्ष्यभूतमुपादिशच्च । भवन्तः सर्वे धनूंष्यादाय सन्धितेषवो भासमेतं समुद्दिश्य तिष्ठत । मद्वाक्यसमकालं तु शिरोऽस्य निपात्यताम् । ततोऽसौ द्विजवरः प्रथमं युधिष्ठिरमवदत् । हे धर्म, बाणं सन्धत्स्व, मद्वाक्यान्ते तं विमुञ्चेति । ततो युधिष्ठिरो धनुर्गृहीत्वा

गुरुवाक्याद्भासं समुद्दिश्यातिष्ठत्। मुहूर्तादेव द्रोणस्तमिदं वचनमब्रवीत्। नृपात्मज, पश्यस्येनं त्वं द्रुमाग्रस्थं भासम् ? ! इत्याकर्ण्य युधिष्ठिरः पश्यामीत्येवमाचार्यं प्रत्यभाषत। पुनश्च द्रोणस्तमवदत्। अथ वृक्षमिमं मां भ्रातॄन्वा प्रपश्यसि ?। स कौन्तेयस्तमुवाच। पश्याम्येनं वनस्पतिं भवन्तं तथा भ्रातॄन्भासं चेति।

असंतुष्टो द्रोणस्तमपसर्पेत्यवदत्। ततः स महायशा दुर्योधनादीन्धार्तराष्ट्रान् क्रमशः पर्यपृच्छत्। ते च सर्वे 'पश्याम' इत्यब्रुवन्।

( द्वितीयच्छेदः )

ततः स्मयमानो द्रोणो धनञ्जयमभ्यभाषत। त्वयेदानीं प्रहर्तव्यमेतल्लक्ष्यं, विलोक्यताम्। मद्वाक्यसमकालं ते मोक्तव्यो भवेच्छरः। पुत्र, कार्मुकं वितत्य मुहूर्तकं तावत्तिष्ठ। एवमुक्तः सव्यसाची भासं समुद्दिश्य स्थितः। मुहूर्तादेव तं द्रोणः समभाषत। पश्यस्येनं द्रुमस्थितं भासं मामपि चार्जुन। पश्याम्येकं भासमिति द्रोणं पार्थोऽभ्यभाषत। न तु वृक्षं भवन्तं वा पश्यामीति। ततः प्रीतमना द्रोणस्तं पुनः प्रत्यभाषत। यद्येनं भासं पश्यसि तर्हि पुनर्ब्रूहि किं पश्यसीति। भासस्य शिरः पश्यामि न तु गात्रमिति सोऽब्रवीत्। अर्जुनेनैवमुक्तो द्रोणो हृष्टो मुञ्चस्वेति पार्थमब्रवीत्। ततः स पाण्डवस्तस्य शिरो निशितेन बाणेन उत्कृत्य भूमौ न्यपातयत्।

EXERCISES.

(1) Explain the forms :—

आरोप्य, निपात्यताम्, गृहीत्वा, स्मयमानः, प्रहर्तव्य, उत्कृत्य.

(2) Change the voice of the following :—

(i) असौ द्विजवरः प्रथमं युधिष्ठिरमवदत्।

(ii) पश्याम्येनं वनस्पतिं भवन्तं तथा भ्रातॄन्भासं च ।
(iii) पुत्र, मुहूर्तकं तावत्तिष्ठ ।

(3) Write the speech between द्रोण and अर्जुन in the form of a dialogue.

(4) Q. छात्राः, अस्मात्पाठात्कीदृशो बोधो युष्माभिर्ग्रहीतव्यः ।

प्रहरणज्ञानं Knowledge in aiming. शिल्पिन् An artisan. अविज्ञातम् Without the knowledge of. लक्ष्यं A mark aimed at; a target. सन्धितेषवः With arrows placed (on the bow). मद्वाक्यसमकालं At that very moment when I utter words ("Discharge"). वनस्पतिः A tree. धनञ्जयः, सव्यसाचिन्, पार्थः These are the names of अर्जुन. कार्मुकः A bow. उत्कृत्य Having cut off.

---

## ८. वानरैर्मधुवनविनाशः ।

ततस्ते वानरा हृष्टा दृष्ट्वा मधुवनं महत् ।
कुमारमभ्ययाचन्त मधूनि मधुपिङ्गलाः ॥ १ ॥

ततः कुमारस्तान्वृद्धाञ्जाम्बवत्प्रमुखान्कपीन् ।
अनुमान्य ददौ तेषां निसर्गं मधुभक्षणे ॥ २ ॥

ते निसृष्टाः कुमारेण धीमता वालिसूनुना ।
प्रविष्टा मधुवनं सर्वे पालानाक्रम्य शक्तितः ॥ ३ ॥

गायन्ति केचित्प्रहसन्ति केचिन्नृत्यन्ति केचित्प्रणमन्ति केचित् ।
पठन्ति केचित्प्रचरन्ति केचित्प्लवन्ति केचित्प्रलपन्ति केचित् ॥४॥

पिबन्ति कपयः केचित्सङ्घशस्तत्र हृष्टवत् ।
केचित्पीत्वापविध्यन्ति मधूनि मधुपिङ्गलाः ॥ ५ ॥
येऽप्यत्र मधुपालाः स्युः प्रेष्या दधिमुखस्य तु ।
तेऽपि तैर्वानरैर्भीमैः प्रतिषिद्धा दिशो गताः ॥ ६ ॥
अब्रुवन्परमोद्विग्ना गत्वा दधिमुखं वचः ।
हनूमता दत्तवरैर्हतं मधुवनं बलात् ॥ ७ ॥
ततो वनं तत्परिभक्ष्यमाणं द्रुमांश्च विध्वंसितपत्रपुष्पान् ।
समीक्ष्य कोपाद्दधिवक्त्रनामा निवारयामास कपिः कपींस्तान् ॥८॥

EXERCISES.

(1) Change the voice of the following :—

(i) ते वानराः कुमारं मधून्यभ्ययाचन्त ।

(ii) ते दधिमुखं गत्वा वचोऽब्रुवन् ।

(iii) हनूमता दत्तवरैस्तैर्हतं मधुवनं बलात् ।

(2) State the grammatical peculiarity of :—
याच् and ब्रू.

(3) (*a*) Explain the following forms :—
हृष्ट, अनुमान्य, धीमता, आक्रम्य, अपविध्यन्ति, स्युः, उद्विग्न, समीक्ष्य.

(*b*) Give forms of Imperfect for :—
ददौ, निवारयामास.

(4) State the various acts of the monkeys which reveal their nature.

पिङ्गल Yellow-coloured. निसर्गः Permission. निसृष्ट Being permitted. पालाः The guardians (of the मधुवन). आ-क्रम् To conquer. शक्तितः By

force. सङ्घशः In groups. अपविध्यन्ति (अप–व्यध्) Throw away. प्रेष्यः A servant. दधिमुखः A name of a monkey, the chief guardian of the orchard मधुवन. भीम (Adj.) Terrific. परमोद्विग्न Greatly dejected. निवारयामास Prevented.

---

## ९. सौवर्णशकटिकाकृते चारुदत्तसुतो रोदिति।

**वसन्तसेना**—रदनिके, कस्य पुनरयं दारकः। अनलंकृतशरीरोऽपि स आनन्दयति मम हृदयम्।

**रद०**—एष खलु आर्यचारुदत्तस्य पुत्रो रोहसेनो नाम।

**वसन्त०**—एहि पुत्रक! अनुकृतमनेन पितृरूपम्।

**रद०**—न केवलं रूपं, शीलमपि, तर्कयामि।

**वसन्त०**—अथ किंनिमित्तं एष रोदिति?।

**रद०**—एतेन प्रतिवेशिक–गृहपति–दारकस्य सुवर्णशकटिकया क्रीडितं, तेन च सा नीता, ततः पुनस्तां याचतो मया इयं मृत्तिका-शकटिका कृत्वा दत्ता। ततो भणति, रदनिके! किं मम एतया मृत्तिका-शकटिकया, तामेव सौवर्णशकटिकां देहीति।

**वसन्त०**—हा धिक्! हा धिक्! अयमपि नाम परसम्पत्त्या सन्त-प्यते। जात! मा रुदिहि, सौवर्णशकटिकया क्रीडिष्यसि।

**दारकः**—रदनिके! का एषा?।

**वसन्त०**—पितुस्ते गुणनिर्जिता दासी।

**रद०**—जात ! आर्या ते जननी भवति ।

**दारकः**—रदनिके ! अलीकं त्वं भणसि । यद्यस्माकमार्या जननी, तत्किमर्थमलङ्कृता ।

**वसन्त०**—जात ! मुग्धेन मुखेनातिकरुणं मन्त्रयसि । ( आभरणान्यवतार्य रुदती ) एषा इदानीं ते जननी संवृत्ता । तद्गृहाणैतमलङ्कारं, सौवर्णशकटिकां कारय ।

**दारकः**—अपेहि, न ग्रहीष्यामि, रोदिषि त्वम् ।

**वसन्त०**—जात ! न रोदिष्यामि, गच्छ, क्रीड । जात ! कारय सौवर्णशकटिकाम् ।

## EXERCISES.

( 1 ) (*a*) How are compounds formed?

Ans. Compounds are formed by joining two words.

(*b*) What is a तत्पुरुष compound ?

Ans. तत्पुरुष स. is one in which two words are joined together. The second word in it is principal; and the first word is secondary and while dissolving the compound, is put in one of the oblique cases. e. g.

चारुदत्तसुतः —चारुदत्तस्य सुतः –षष्ठी त. स.

गुणनिर्जिता—गुणैः निर्जिता–तृतीया त. स.

( 2 ) Explain the following forms :—

एहि, देहि, रुदिहि, मुग्ध, अवतार्य, कारय, अपेहि.

शकटिका A cart. अनलङ्कृत Not adorned with ornaments. अनु-कृ To imitate. प्रतिवेशिकः A neighbour. मृत्तिका An earth. सं-तप् To be distressed. जातः A son. गुणनिर्जित Won over by merits. अलीकं A lie. मुग्ध Innocent. अवतार्य Taking off.

---

## १०. शिशुपालवधः ।

ततश्चेदिराजो वासुदेवमब्रवीत् । हे जनार्दन, आह्वये त्वां युद्धाय, सर्वपाण्डवैः सहितं त्वामद्य निहन्मीति । एवमुक्तो वीर्यवान् कृष्ण इदं वचोऽ-



वदत् । शृणुत, पार्थिवाः सर्वे, नः शत्रोरपराधान् । अयमेव नृशंसो येन पुरा दग्धा द्वारकानगरी । अनेनैव पापकर्मणा बभ्रोर्भार्यापहृता । एष एव नृशंसकृद्योऽपाहरत्स्वमातुलस्य भद्रां नाम कन्याम् । अस्य मूढस्य रुक्मिण्यां प्रार्थनाऽऽसीत्, किंतु न तां प्राप्तवानसौ मूढ इति ।

वासुदेववचः श्रुत्वा ते सर्वे नराधिपाश्चेदिराजं व्यगर्हयन्। ततः प्रतापवाञ्छिशुपाल इदमब्रवीत् । हे कृष्ण, क्रुद्धाद्वापि प्रसन्नाद्वा किं मे त्वत्तो भविष्यति। इत्युक्तो भगवान्मधुसूदनो मनसा दैत्यगर्वनिषूदनं चक्रमचिन्तयत्। चक्रे हस्तगते सति भगवानुच्चैर्वाक्यमभाषत। शृण्वन्तु महीपालाः। अपराधशतं क्षाम्यं मातुरस्यैव याचने । तन्मया दत्तं याचितम्। अपराधशतमस्य वै पूर्णम्। अधुना वो महीक्षितां पश्यतां तमहं निहन्मि। एवमुक्त्वा क्रुद्धो यदुश्रेष्ठस्तत्क्षणाच्चेदिराजस्य शिरश्चक्रेण व्यपाहरत् ।

## EXERCISES.

(1) Explain the following constructions :—

(i) चक्रे हस्तगते सति ।

(ii) पश्यतां वो महीक्षिताम् ।

(2) Name and dissolve the following compounds :—

शिशुपालवधः; वासुदेववचः; दैत्यगर्वः ।

(3) Explain the forms :—

दग्धा, मूढ, प्रसन्न, क्षाम्य, पश्यताम्.

(4) Q. वर्ण्यन्तां शिशुपालस्य पापानि येन स कृष्णस्य वध्यो जातः ।

आ–ह्वे ( Atm. ) To challenge. पापकर्मन् A sinful one. नृशंसकृत् A cruel one. मातुलः A maternal uncle. व्यगर्हयन् Censured. दैत्यगर्वनिषूदन Destroyer of the pride of the demons. व्यपाहरत् Cut off.

## ११. संकीर्णश्लोकाः ।

क्षमी दाता गुणग्राही स्वामी दुःखेन लभ्यते ।
शुचिर्दक्षोऽनुरक्तश्च जाने भृत्योऽपि दुर्लभः ॥ १ ॥

यदि समरमपास्य नास्ति मृत्यो–
र्भयमिति युक्तमितोऽन्यतः प्रयातुम् ।
अथ मरणमवश्यमेव जन्तोः
किमिति मुधा मलिनं यशः क्रियते ॥ २ ॥

विषमां हि दशां प्राप्य दैवं गर्हयते नरः ।
आत्मनः कर्मदोषांस्तु नैव जानात्यपण्डितः ॥ ३ ॥

विश्वासप्रतिपन्नानां वञ्चने का विदग्धता ।
अङ्कमारुह्य सुप्तं हि हत्वा किं नाम पौरुषम् ॥ ४ ॥

वनेऽपि दोषाः प्रभवन्ति रागिणां
गृहेऽपि पञ्चेन्द्रियनिग्रहस्तपः ।
अकुत्सिते कर्मणि यः प्रवर्तते
निवृत्तरागस्य गृहं तपोवनम् ॥ ५ ॥

सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव संपदः ॥ ६ ॥

अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः ।
ज्ञानलवदुर्विदग्धं ब्रह्मापि नरं न रञ्जयति ॥ ७ ॥

दुर्जनदूषितमनसः सुजनेष्वपि नास्ति विश्वासः ।
बालः पायसदग्धो दध्यपि फूत्कृत्य भक्षयति ॥ ८ ॥

लुब्धमर्थेन गृह्णीयात्स्तब्धमञ्जलिकर्मणा ।
मूर्खं छन्दानुरोधेन यथातथ्येन पण्डितम् ॥ ९ ॥
मृगतृष्णासमं वीक्ष्य संसारं क्षणभङ्गुरम् ।
सज्जनैः संगतं कुर्याद्धर्माय च सुखाय च ॥ १० ॥

गुणग्राहिन् One who appreciates merits. शुचि Honest. मुधा In vain. विषमा दशा A bad state. कर्मदोषः A fault of (one's own) actions. विदग्धता Wisdom. पौरुषम् Bravery. दोषाः Temptations. रागिन् One who is affected by passion. पञ्चेन्द्रियनिग्रहः Controlling the five organs of sense. निवृत्तरागः One who is freed from passion. अविवेकः Rashness. विमृश्यकारिन् A thoughtful person. सुखम् Easily. विशेषज्ञः A learned man. ज्ञानलवदुर्विदग्ध Proud of the little knowledge. पायसदग्ध (With the hand) burnt by milk. फूत्कृत्य Having cooled with the breath. लुब्ध Covetous. स्तब्ध Rude, stubborn. छन्दानुरोधेन By acting according to one's whim. यथातथ्यं Truthfulness. मृगतृष्णा A mirage.

---

## १२. व्यसनमुक्तस्य ब्राह्मणस्य ।

### ( प्रथमः परिच्छेदः )

एकदा कुन्तीपुत्रा एकचक्रां नाम नगरीं गत्वा कस्यचिद्ब्राह्मणस्य निवेशनेऽवसन् । ततः कदाचिद्भैक्षाय ते गताः किंतु भीमसेनः कुन्त्या सह गृह एवातिष्ठत् । तदा तस्य ब्राह्मणस्य निवेशने कुन्ती घोरं रोदनमशृणोत् । तदा

सा तान्समुपसृत्याब्रवीत्। कुतोमूलमिदं दुःखं ज्ञातुमिच्छामि। अपकर्षितुं शक्यं चेदपकर्षेयमिति।

तदा ब्राह्मण उवाच। इदं दुःखं मानुषेण व्यपोहितुं न शक्यम्। अस्य नगरस्य समीपं बको नाम महाबलो राक्षसो वसति। मानुषमांसेन पुष्टोऽसौ जनपदमिमं नित्यं रक्षति। तस्य वेतनं विहितं शालिवाहस्य भोजनं, महिषौ पुरुषश्चैको यस्तदादाय गच्छति। एकैकश्चापि पुरुषस्तत्प्रयच्छति भोजनम्। सोऽयं कुलविनाशनो वारोऽस्माननुप्राप्तः। गतिं चैव न पश्यामि तस्मान्मोक्षाय रक्षसः। सोऽहं दुःखार्णवे मग्न इति।

## ( द्वितीयः परिच्छेदः )

तदा कुन्त्यब्रवीत्। न विषादस्त्वया कार्यः। उपायः परिदृष्टोऽत्र तस्मान्मोक्षाय रक्षसः। ब्रह्मन्, मम पञ्च सुतास्तेषामेको गमिष्यतीति। तदा ब्राह्मणेनोक्तम्। नाऽहमेतत्करिष्यामि कथंचन। श्रेयांस्तु सदारस्य मम विनाशोऽद्य। किंतु ब्राह्मणस्य वधं नाऽहमनुमंस्ये कदाचनेति। कुन्त्या प्रतिभाषितम्। न चासौ राक्षसः शक्तो मम पुत्रविनाशने। मम पुत्रो वीर्यवांस्तेजस्वी च। राक्षसाय भोजनं दत्त्वा मोक्षयिष्यति चात्मानमिति।

एवमुक्तः कुन्त्या स विप्रो हृष्टोऽभवत्। ततः कुन्ती तत्कुरुष्वेति भीममब्रवीत्स तथेत्यवदच्च।

## ( तृतीयः परिच्छेदः )

ततो रात्र्यां व्यतीतायां भीमसेनोऽन्नमादाय तत्र प्रायाद्यत्रासीदसौ पुरुषादकः। तं राक्षसं च नाम्नाऽऽह्वयत्। तेन क्रुद्धोऽसौ भीममुपागच्छत्। तदन्नं भुञ्जानं भीमसेनं दृष्ट्वा स इदं वचनमब्रवीत्। कोऽयं मदर्थमुपकल्पि-

तमन्नमिदं भुङ्क्ते । तच्छ्रुत्वा प्रहसन्भीमसेनस्तदन्नं भुङ्क्त एव । संक्रुद्धोऽसौ राक्षसो भीमं पाणिभ्यां पृष्ठेऽहन् वृक्षमादाय तं च तेनाताडयत् । किंतु भीमस्तदेवान्नं भुङ्क्त एव । शनैरन्नं भुक्त्वा महाबलो भीमो युद्धायोदतिष्ठत् । दक्षिणेन बाहुना तस्य शिरोधरां परिगृह्य, सव्येन पाणिना कटिदेशे वाससि गृहीत्वा भीमो भैरवं रवं कुर्वन्तं तं दानवं द्विगुणं कृतवान् । तदा तस्य वक्त्राद्रुधिरं प्रादुरासीत् । ततः स बको गतासुरभवत् । ततः स भीमस्तं हत्वा ब्राह्मणवेश्म गत्वा तस्मै सर्वं वृत्तान्तमकथयच्च । स च ब्राह्मणः सदारपुत्रः प्रमुदितोऽभवत् ।

## EXERCISES.

(1) Explain the forms :—

व्यपोहितुम्, पुष्टः, विहित, कार्यः, अनुमंस्ये, व्यतीतायां, भुञ्जान.

(2) Q. संक्षेपेण लिख्यतामियं कथा ।

भैक्षं Begging alms. अप–कृष् To remove. व्यपोहितुं To remove. जनपदः A country. वेतनं Wages. शालिः Rice. वाहः A kind of measure equal to ten kumbhas or four Bharas. वारः A turn. विहित Agreed. गतिः A way. अनु–मन् To consent to. पुरुषादकः A man-eater. सव्य Left. शिरोधरा A neck. कटिदेशः A waist. द्विगुणं कृ To fold double. रुधिरं Blood.

## १३. चौरराक्षसौ।

कश्चित्प्रतिग्रहेण द्वे गावौ प्राप द्विजोत्तमः।
तस्य दृष्ट्वाथ चौरस्ते गावौ नेतुमचिन्तयत्।
तत्कालं राक्षसः कोऽपि तमैच्छत्खादितुं द्विजम्॥ १॥
तदर्थं निशि गच्छन्तौ दैवात्तौ चौरराक्षसौ।
मिलित्वान्योन्यमुक्तार्थौ तत्र प्रययतुः समम्॥ २॥
अहं धेनू हराम्यादौ त्वद्गृहीतो ह्ययं द्विजः।
सुप्तो यदि प्रबुद्धस्तद्धरेयं गोयुगं कथम्॥ ३॥
मैवं हराम्यहं पूर्वं विप्रं नो चेद्वृथा मम।
भवेद्गोखुरशब्देन प्रबुद्धेऽस्मिन्परिश्रमः॥ ४॥
इति प्रविश्य तद्विप्रसदनं चौरराक्षसौ।
यावत्तौ कलहायेते तावत्प्राबोधि स द्विजः॥ ५॥
उत्थायात्तकृपाणे च तस्मिन्रक्षोघ्नजापिनि।
ब्राह्मणे जग्मतुश्चौरराक्षसौ द्वौ पलाय्य तौ॥ ६॥

EXERCISES.

(1) Define a द्वन्द्वसमास.

द्वन्द्वसमास consists of two words, each one of which is independent. e. g. चौरराक्षसौ = चौरश्च राक्षसश्च। Similarly dissolve कौरवपाण्डवाः।

(2) (*a*) प्राप = प्राप्नोत् (obtained); प्रययतुः = प्रायाताम् (started); प्राबोधि = प्राबोधत् (awoke); जग्मतुः = अगच्छताम् (went).

(*b*) Explain the following form and give some similar words :— कलहायते।

(3) State in Sanskrit what the thief and the demon spoke to each other in order to achieve their own respective object.

प्रतिग्रहः A present. युगं A pair. समं At the same time. गोखुरः A hoof of a cow. सदनं A house. विप्रः A brahmin. प्राबोधि Got up. आत्तकृपाणः One who has taken a sword. जापिन् Muttering prayer ( which would kill the demon ).

---

## १४. न्यासीकृतालङ्करणभाण्डस्यापहरणम् ।

### ( प्रथमो भागः )

**शर्विलकः**—( महतीं निवासरचनामवलोक्य, अन्तः प्रविश्य च ) अये ! पुरुषद्वयं सुप्तम् । भवतु, आत्मरक्षार्थं द्वारमुद्धाटयामि । कथं जीर्णत्वाद्गृहस्य विरौति कपाटः तद्यावत्सलिलमन्वेषयामि । क नु खलु सलिलं भविष्यति । ( इतस्ततो दृष्ट्वा सलिलं गृहीत्वा क्षिपति ) मा तावत् भूमौ पतत् शब्द-मुत्पादयेत् । भवतु, इदानीं तावत्परीक्षे, किं लक्ष्यसुप्तम् उत परमार्थसुप्तमिदं द्वयम् । ( परीक्ष्य ) अये ! परमार्थसुप्तेनानेन भवितव्यम् । लक्ष्यसुप्तं यदि स्यात्तर्हि दीपमभिमुखं न मर्षयेत् । ( समन्तादवलोक्य ) अये ! कथं मृदङ्गः । इयमपि वीणा । एते वंशाः । कथं नाट्याचार्यस्य गृहमिदम् । अथवा, परमार्थदरिद्रोऽयम् । चौरभयाद्वा भूमिष्ठं द्रव्यं धारयति । तन्ममापि नाम शर्विलकस्य भूमिष्ठं द्रव्यम् । भवतु, बीजं प्रक्षिपामि । ( तथा कृत्वा ) निक्षिप्तं बीजं न क्वचित् स्फारीभवति । अये ! परमार्थदरिद्रोऽयम् । भवतु, गच्छामि ।

( द्वितीयो भागः )

**विदूषकः**—( उत्स्वप्नायते ) भो वयस्य ! चौरमिव पश्यामि; तत् गृह्णातु भवान् इदं सुवर्णभाण्डम् ।

**शर्वि०**—अये, सत्यमेवैतदलङ्करणभाण्डम् । भवतु गृह्णामि । अथवा, न युक्तं तुल्यावस्थं कुलपुत्रजनं पीडयितुम्, तद्गच्छामि ।

**विदू०**—भो वयस्य ! शापितोऽसि गोब्राह्मणकाम्यया, यदि एतत् सुवर्णभाण्डं न गृह्णासि ।

**शर्वि०**—अनतिक्रमणीया गोब्राह्मणकाम्या । तद्गृह्णामि । किंतु ज्वलति प्रदीपः । भवतु, एष मुक्तो मयाग्नेयः कीटस्तन्निर्वापणार्थम् । धिकृतमन्धकारम्, अथवा, मयापि ब्राह्मणकुले धिक्कृतमन्धकारम् । अहं हि शर्विलको नाम ब्राह्मणो मदनिकार्थमकार्यमनुतिष्ठामि । इदानीं करोमि ब्राह्मणस्य प्रणयम् । ( गृह्णाति )

**विदू०**—गृहीतम् ? ।

**शर्वि०**—अनतिक्रमणीयोऽयं ब्राह्मणप्रणयः, तद्गृहीतम् ।

**विदू०**—इदानीं सुखेन स्वपिम्यहम् ।

**शर्वि०**—महाब्राह्मण । स्वपिहि वर्षशतम् । ( इति गच्छति । )

## EXERCISES.

( 1 ) Explain the forms :—
न्यासीकृत, स्फारीभवति, उत्स्वप्नायते.

( 2 ) Write notes on :—
अनेन सुप्तेन भवितव्यम्; नाम; गोब्राह्मणकाम्यया शापितोऽसि.

(3) What is a नञ्तत्पुरुष समास ?

When the first word of a तत्पु. स. is अ or अन्, a negative particle, the compound is नञ् त. स. e. g. अकार्यम्=न कार्यम्; similarly dissolve अनतिक्रमणीया.

न्यास: A deposit. निवासरचना A building. द्वयम् A collection of two. कपाट: A panel of a door. उद्घाटयामि '(i) open.' 1st Pers. sing. of उद्–घट् 10th conj. लक्ष्यसुप्त Feigning sleep. परमार्थ, Used in comp., in the sense of "True or real." वंशः A pipe. भूमिष्ठ Placed under ground. स्फारीभवति Increases, multiplies. उत्स्वप्नायते Speaks in a dream. तुल्यावस्थं Being in the same condition. काम्या A desire. अनतिक्रमणीय That cannot be transgressed. कीट: An insect. आग्नेय Pertaining to a fire. धिक्कृत Cursed, despised. प्रणय: A request.

---

## १५. उर्वशीविमोचनं दानवहस्तात् ।

**अप्सरसः**—परित्रायतां परित्रायतां यः सुरपक्षपाती यस्य वाम्बरतले गतिरस्ति ।

**राजा**—( ता उपसृत्य ) अलमलमाक्रन्दितेन । पुरूरवसं मामुपेत्य कथ्यतां कुतो भवत्यः परित्रातव्या इति ।

**मेनका**—शृणोतु महाराजः । नः प्रियसख्युर्वशी कुबेरभवनात्प्रतिनिवर्तमाना केशिना दानवेन चित्रलेखाद्वितीया बन्दिग्राहं गृहीता ।

**राजा**—अपि ज्ञायते कतमेन दिग्भागेन गतः स जाल्म इति ।

**अप्सरसः**—पूर्वोत्तरेण ।

**राजा**—तेन हि विमुच्यतां विषादः । यतिष्ये वः सखीप्रत्यानयनाय । क्व पुनर्मां भवत्यः प्रतिपालयिष्यन्ति ।

**सर्वाः**—एतस्मिन्हेमकूटशिखरे ।

( राजा गच्छति । सर्वा अप्सरसश्च शैलशिखरमवतरन्ति )

**रम्भा**—अपि नाम स राजर्षिर्न उर्वशीं समुद्धरेत् ।

**मेनका**—हला, मा ते संशयो भवतु । सर्वथा विजयी भवतु सः ।

**रम्भा**—हला, एष खलु राजर्षिरागच्छति । नैषोऽकृतार्थो निवर्तिष्यते

( ततः प्रविशति राजा चित्रलेखाद्वितीयामुर्वशीं गृहीत्वा )

**अप्सरसः**—दिष्ट्या महाराजो विजयेन वर्धते ।

**राजा**—भवत्यश्च सखीसमागमेन ।

**उर्वशी**—हला पीडितं मां परिष्वजध्वम् । न खलु मम आशासीद् भूयोऽपि सखीजनं प्रेक्षिष्य इति ।

**रम्भा**—सर्वथा महाराजः कल्पशतानि पृथिवीं पालयिता भवतु ।

## Exercises.

(1) Explain the forms :—

भवत्यः, परित्रातव्या, उपेत्य.

(2) Write notes on :—

अलम्; कतमेन दिग्भागेन; अपि; हला; दिष्टया वर्धते विजयेन.

( 3 ) (*a*) Explain कर्मधारय समास.

When the first word of a compound is an adjective, the compound is कर्मधारय. e. g. प्रिय-सखी=प्रिया च सखी च.

(*b*) Name and dissolve the following compounds :—

चारभयम्; महाब्राह्मणः; महाराजः.

सुरपक्षपातिन् One who is a friend of gods. अम्बरतले गतिरस्ति Who can travel through the sky. बन्दिग्राहं गृहीता Taken a prisoner. जाल्मः A wretch. विषादः Sorrow. प्रतिपालयिष्यन्ति Will wait. अकृतार्थ Without accomplishing one's object. दिष्ट्या—वर्धते We congratulate your Majesty upon your success. पीडितं closely. कल्पशतानि For hundreds of kalpas *i. e.* for a long time.

---

## १६. सिंहशशकयोः कथा ।

अभूत्क्वापि वने सिंह एकवीरोऽपराजितः ।
स च यं यं ददर्शात्र सत्त्वं तं तं न्यपातयत् ॥ १ ॥

ततः सोऽभ्यर्थितः सर्वैः संभूयात्र मृगादिभिः ।
आहाराय तवैकैकं प्रेषयामो दिने दिने ।
इति तद्वचनं सिंहः स तथेत्यन्वमन्यत ॥ २ ॥

एकदा शशकस्यागाद्वार एकस्य तत्कृते ।
स सर्वैः प्रेषितो गच्छञ्शशो धीमानचिन्तयत् ॥ ३ ॥

उपस्थितेऽपि मृत्यौ तद्युक्तिं तावत्करोम्यहम् ।
इत्यालोच्य स तं सिंहं विलम्ब्य शशकोऽभ्यगात् ॥ ४ ॥

आगतं तु विलम्बेन केसरी निजगाद सः ।
अरे वेला व्यतिक्रान्ता ममाहारे कथं त्वया ॥ ५ ॥

इत्युक्तवन्तं तं सिंहं प्रह्वः स शशकोऽब्रवीत् ।
न मे देवापराधोऽयं स्ववशो नाहमद्य यत् ॥ ६ ॥



मार्गे विधार्य सिंहेन द्वितीयेनोज्झितश्चिरात् ।
सोऽब्रवीत्को द्वितीयोऽसौ सिंहो मे दर्श्यतां त्वया ॥ ७ ॥

आगत्य दृश्यतां देवेत्युक्त्वा सोऽपि निनाय तम् ।
तथेत्यन्वागतं सिंहं दूरं कूपान्तिकं शशः ।
इहान्तःस्थं स्थितं पश्येत्युक्तस्तत्र च तेन सः ॥ ८ ॥

दृष्ट्वा स्वच्छे च तोये स्वं प्रतिबिम्बं निशम्य च ।
स्वगर्जितप्रतिरवं मत्वा तत्रातिगर्जितम् ॥ ९ ॥
प्रतिसिंहं स कोपेन तद्वधाय मृगाधिपः ।
आत्मानमक्षिपत्कूपे मूढोऽत्रैव व्यपादि च ॥ १० ॥

## EXERCISES.

(1) Change the voice of the following :—

(i) असौ सिंहो मे दर्श्यतां त्वया ।

(ii) उक्तस्तत्र च तेन सः ।

(2) Use a compound for the following :—
दिने दिने । आदौ विधृतः पश्चात् उज्झितः । स्वं प्रतिबिम्बम् ।

(3) Explain the forms :—

न्यपातयत्, संभूय, आलोच्य, अभ्यगात्, व्यतिक्रान्त, उक्तवन्तम् विधार्य, उज्झित, व्यपादि.

(4) Write the above poem in Sanskrit in prose. Or, compose a dialogue between a lion and a rabbit.

अपराजित Invincible. सत्त्वः A creature. संभूय United together (in a body). वारः A turn. आलोच्य Having thought. विलम्ब्य Having delayed. केसरिन् A lion. वेला Time. प्रह्व Bowing humbly down. विधार्य Being seized. उज्झित Left off. तोयं Water प्रतिबिम्बं An image. प्रतिरवः Echo. व्यपादि Died.

## १७. उपाध्यायेन शप्तोर्वशी।

**प्रथमः शिष्यः**—सखे पल्लव, पृच्छामि त्वां खलु। अपि गुरोः प्रयोगेण दिव्या परिषदाराधिता।

**द्वितीयः शिष्यः**—गालव, न जाने आराधिता न वेति। लक्ष्मीस्वयंवरे नाम तस्मिन् काव्यबंधे विविधेषु रसेषु तन्मय्यासीत्। किंतु तस्मिन्नुर्वश्या वचनं प्रमादस्खलितमासीत्

**प्रथमः**—कथमिव।

**द्वितीयः**—लक्ष्मीभूमिकायां वर्तमानोर्वशी वारुणीभूमिकायां वर्तमानया मेनकया पृष्टा। सखि, समागता एते सकेशवा लोकपालाः। कतमस्मिंस्त्वं बद्धभावा।

**प्रथमः**—ततस्ततः।

**द्वितीयः**—ततस्तया पुरुषोत्तम इति भणितव्ये पुरूरवसीति निर्गता वाणी।

**प्रथमः**—न खलु तामभिक्रुद्धो गुरुः।

**द्वितीयः**—सा खलु शप्तोपाध्यायेन। महेन्द्रेण पुनरनुगृहीता।

**प्रथमः**—कथमिव।

**द्वितीयः**—येन ममोपदेशस्त्वया लङ्घितस्तेन न ते दिव्यं स्थानं भविष्यतीत्युपाध्यायस्य शापः। महेन्द्रेण पुनः प्रेक्षणावसाने सा भणिता यस्मिन्बद्धभावासि तस्य राजर्षेः प्रियं मया करणीयम्। अतस्त्वं पुरूरवसमुपतिष्ठस्व यावत्स त्वयि दृष्टसंतानो भवेदिति।

**प्रथमः**—सदृशमेतन्महेन्द्रस्य।

EXERCISES.

(1) Explain the forms :—
आराधिता, भणितव्य, करणीय, उपतिष्ठस्व, शप्त.

(2) Write notes on :—
तामभिक्रुद्धः; सदृश.

(3) Q. कः प्रमाद उर्वश्या कृतो येन सा गुरुणा शप्ता ।

दिव्या परिषद् Heavenly audience. प्रयोगः A dramatic performance. आराधिता Pleased. काव्यबंध A play. तन्मयी Absorbed. वचनं—सीत् (उर्वशी) had a slip of the tongue through carelessness. लक्ष्मी-भूमिका The part of Laxmi. लोकपालाः The guardians of the quarters. बद्धभाव One who has fixed one's love. ततस्ततः Proceed. अनुगृहीत Favoured. प्रेक्षणावसानं The close of the performance. त्वयि दृष्टसंतानः (He) having seen an offspring born of you.

---

## १८. संकीर्णश्लोकाः ।

संयोजयति विद्यैव नीचगापि नरं सरित् ।
समुद्रमिव दुर्धर्षं नृपं भाग्यमतः परम् ॥ १ ॥

अजरामरवत् प्राज्ञो विद्यामर्थं च चिन्तयेत् ।
गृहीत इव केशेषु मृत्युना धर्ममाचरेत् ॥ २ ॥

अनेकसंशयोच्छेदि परोक्षार्थस्य दर्शकम् ।
सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः ॥ ३ ॥

धर्मार्थकाममोक्षाणां यस्यैकोऽपि न विद्यते ।
अजागलस्तनस्येव तस्य जन्म निरर्थकम् ॥ ४ ॥

यदभावि न तद्भावि भावि चेन्न तदन्यथा ।
इति चिंताविषघ्नोऽयमगदः किं न पीयते ॥ ५ ॥

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी—
दैवेन देयमिति कापुरुषा वदन्ति ।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ॥ ६ ॥

कीटोऽपि सुमनःसङ्गादारोहति सतां शिरः ।
अश्मापि याति देवत्वं महद्भिः सुप्रतिष्ठितः ॥ ७ ॥

मातृवत्परदारेषु परद्रव्येषु लोष्टवत् ।
आत्मवत्सर्वभूतेषु यः पश्यति स पण्डितः ॥ ८ ॥

असंभवं हेममृगस्य जन्म तथापि रामो लुलुभे मृगाय ।
प्रायः समापन्नविपत्तिकाले धियोऽपि पुंसां मलिना भवन्ति ॥ ९ ॥

विपदि धैर्यमथाभ्युदये क्षमा सदसि वाक्पटुता युधि विक्रमः ।
यशसि चाभिरुचिर्व्यसनं श्रुतौ प्रकृतिसिद्धमिदं हि महात्मनाम् ॥ १० ॥

नीचगा (1) Possessed by a low person. (2) Flowing downward. दुर्धर्ष Inaccessible. भाग्यमतःपरम् (1) From which proceeds a great fortune. (2) More than that depends upon fate (the future rests with fortune). अजरामरवत् Like one who is not subject to old age or death. गृहीत इव केशेषु

मृत्युना As if caught by the hair by the God of Death. परोक्षार्थः An object concealed from the sight. चिंताविषघ्नः Which destroys poison in the form of anxiety. पुरुषसिंहः An excellent person. कापुरुषाः The weak-minded persons. सुमनःसङ्गात् Being in contact with flowers. सुप्रतिष्ठितम् Well consecrated. आत्मवत्सर्वभूतेषु Upon all creatures as his own self. लुब्धे Desired for. समापन्नविपत्तिकाले When some calamity is approaching. सदसि In an assembly. व्यसनं श्रुतौ An attachment to study. प्रकृतिसिद्धम् Natural merits.

---

## १९. कलहायमानौ चन्दनकवीरकौ ।

**चेटः**—यातम्, गावौ, यातम् ।

**वीरकः**—( अवलोक्य ) अरे प्रवहणवाहक, मा तावदेतत् प्रवहणं वाहय; कस्यैतत् प्रवहणं? को वा इहारूढः? कुत्र वा व्रजति?

**चेटः**—एतत् खलु प्रवहणम् आर्यचारुदत्तस्य । इहार्या वसन्तसेना आरूढा । पुष्पकरण्डकोद्यानं च नीयते ।

**चन्दनकः**—तद्गच्छतु ।

**वीरकः**—अनवलोकित एव ?

**चन्द०**—अथ किम् ।

**वीरकः**—कस्य प्रत्ययेन ?

**चन्द०**—आर्यचारुदत्तस्य ।

**वीरकः**—क आर्यचारुदत्त ? का वा वसन्तसेना ?

**चन्द०**—अरे आर्यचारुदत्तं न जानासि ? न वा वसन्तसेनाम् ? कस्तं गुणारविन्दं न जानाति ? अस्यां नगर्या द्वावेव पूजनीयौ तिलकभूतौ च।

**वीरकः**—अरे चन्दनक, जानामि चारुदत्तम्। सुष्ठु जानामि वसन्तसेनां च। राजकार्ये तु प्राप्ते सति, पितरमपि न जानामि। अतस्त्वं अवलोकय।

**चन्द०**—अरे, उन्नामय धुरम्।

**आर्यकः**—अपि रक्षिणो मामवलोकयन्ति ? अशस्त्रश्चास्मि मन्दभाग्यः।

( **चन्द०**—प्रवहणमारुह्यावलोकयति। )

**आर्यकः**—शरणागतोऽस्मि,

**चन्द०**—अभयं शरणागतस्य।( अवलोक्य ) कथं आर्यको गोपालदारकः ? तत्किमिदानीमत्र युक्तमनुष्ठातुम् ? अथवा, यद्भवतु तद्भवतु, प्रथममेवाभयं दत्तम्। ( प्रवहणादवतीर्य ) दृष्ट आर्यः। न, आर्या वसन्तसेना।

**वीरकः**—चन्दनक ! अत्र मे संशयः समुत्पन्नः।

**चन्द०**—कथं ते संशयः ?

**वीरकः**—यत्त्वया भणितं दृष्टो मया खलु आर्यः पुनरपि आर्या वसन्तसेना तेन मे अप्रत्ययः।

**चन्दः**—अरे, वयं दाक्षिणात्या अव्यक्तभाषिणः।

**वीरकः**—ननु अहमपि विलोकयामि। राजाज्ञा एषा।

**चन्दः**—अरे वीरक, मया चन्दनकेन प्रलोकितं, पुनरपि त्वं प्रलोकयसि, कस्त्वम् ?।

**वीरकः**—अरे, त्वमपि कः ?

**चन्द्ः**—त्वमात्मनो जातिं न स्मरसि ?

**वीरकः**—अरे, का मम जातिः ?

**चन्द्ः**—को भणतु ?

**वीरकः**—भणतु ।

**चन्द्ः**—कर्तरीव्यापृतहस्तस्त्वं सेनापतिर्जातः ।

**वीरकः**—अरे चन्दनक ! त्वमपि आत्मनो जातिं न स्मरसि ?

**चन्द्ः**—अरे ! का मम चन्दनकस्य जातिः ?

**वीरकः**—को भणतु ?

**चन्द्ः**—भणतु ।

**वीरकः**—चर्मकारसुतस्त्वं सेनापतिर्जातः ।

**चन्द्ः** —अहं चर्मकारः ? तत् प्रलोकय प्रवहणम् ।

**वीरकः**—अरे प्रवहणवाहक ! अहं प्रवहणं प्रलोकयिष्यामि ।

( वीरकः प्रवहणमारोढुमिच्छति, चन्दनकः केशेषु गृहीत्वा पातयति, पादेन ताडयति )

**वीरकः**—( सक्रोधमुत्थाय ) अरे, अहं राजाज्ञप्तिं कुर्वन्, केशेषु गृहीत्वा पादेन ताडितः। एतत्सर्वं राजकुले निवेदयामि ।

**चन्द्ः**—राजकुलम्, अधिकरणं वा व्रज; किं त्वया शुनकसदृशेन ?

( वीरकः तथेत्युक्त्वा गच्छति । )

## EXERCISES.

(1) Explain the forms :—

कलहायमान, यातम्, उन्नामय, व्यापृत, उत्थाय.

(2) Write in Sanskrit a dialogue between two pupils, one throwing the books of another on the road and the other going away to report this to his teacher.

प्रवहणं A covered carriage. प्रत्यय: Confidence. तिलकं An ornament. अभयं Safety. दाक्षिणात्य A native of the Deccan. अव्यक्त Indistinct. कर्तरी Scissors. चर्मकार: A shoe-maker. शुनक: A dog.

---

## २०. उषा ।

बाणासुरस्य तनया बभूवोषेति विश्रुता ।
तस्याश्चाराधिता गौरी पतिप्राप्त्यै वरं ददौ ।
स्वप्ने प्राप्स्यसि यत्सङ्गं स ते भर्ता भवेदिति ॥ १ ॥



ततो देवकुमाराभं कंचित्स्वप्ने ददर्श सा ।
गन्धर्वविधिना तेन परिणीता तथैव च ॥ २ ॥

प्रभाते प्रबुद्धा सा नापश्यत स्वकं पतिम् ।
ताम्यन्ती च ततः सा वै सख्यै सर्वं शशंस तत् ॥ ३ ॥
योगेश्वरी चित्रलेखा तामुषामेवमब्रवीत् ।
सखि देवीवरस्यायं प्रभावोऽत्र किमुच्यते ॥ ४ ॥
किं त्वभिज्ञानशून्यस्ते सोऽन्वेष्टव्यः प्रियः कथम् ।
जगल्लिखामि तन्मध्ये तं मे दर्शय येन सः ॥ ५ ॥
आनीयते मयेत्युक्ता सा तथेत्युदिते तया ।
चित्रलेखा क्रमाद्विश्वमलिखद्वर्णवर्तिभिः ॥ ६ ॥
तत्रोषा सोऽयमित्यस्या हृष्टाङ्गुल्या सकम्पया ।
द्वारवत्यां यदुकुलादनिरुद्धमदर्शयत् ॥ ७ ॥
चित्रलेखा ततोऽवादीत्सखि धन्यासि यत्त्वया ।
भर्ताऽनिरुद्धः प्राप्तोऽयं पौत्रो भगवतो हरेः ॥ ८ ॥
तदैवोत्पत्य नभसा ययौ द्वारवतीं पुरीम् ।
ददर्श च पृथूत्तुङ्गैर्मन्दिरैरब्धिमध्यगाम् ॥ ९ ॥
तस्यां सुप्तं निशि प्राप्य साऽनिरुद्धं विबोध्य च ।
उषानुरागं तं तस्मै शशंस स्वप्नदर्शनात् ॥ १० ॥
ततः सिद्धप्रभावेण क्षणेनैवाययौ पुनः ।
प्रावेशयदुषायास्तं गुप्तमन्तःपुरं प्रियम् ॥ ११ ॥
ततस्तेन समं तस्थौ सखीदत्तेन तत्र सा ।
जीवितेनेव मूर्तेन वल्लभेन यथासुखम् ॥ १२ ॥
तज्ज्ञानात्पितरं चास्याः क्रुद्धं बाणं जिगाय सः ।
अनिरुद्धः स्ववीर्येण पितामहबलेन च ॥ १३ ॥

## EXERCISES.

( 1 ) Separate the following words :—
जगल्लिखामि; पृथूत्तुङ्गैर्मन्दिरैरब्धिमध्यगाम् ; तज्ज्ञानात्.

( 2 ) Use forms of Imperfect for the following :—
बभूव, ददौ, ददर्श, शशंस, अवादीत्, ययौ, जिगाय.

( 3 ) Change the voice of the following :—

( i ) सा कंचित्स्वप्नेऽपश्यत् ।

( ii ) तेन सा परिणीता ।

(iii) स आनीयते मया ।

(iv) अनिरुद्धः स्ववीर्येण तं बाणमजयत् ।

( 4 ) Explain the following forms :—
ताम्यन्ती, अन्वेष्टव्य, अदर्शयत्, उत्पत्य, प्रावेशयत्.

( 5 ) Q. संक्षेपेण वर्ण्यतामुषाख्यानम् ।

तनया A daughter. विश्रुत Famous. वरः A boon. देवकुमाराभ Resembling a son of a god. तम् (ताम्यति) To be distressed. योगेश्वरी One who has obtained superhuman faculties. अभिज्ञानं A sign of recognition. लिख् ( लिखति ) To paint. वर्णवर्तिः A paint-brush. पौत्रः A grandson. उत्तुङ्ग Lofty. अब्धिमध्यग Lying in the midst of the ocean. अनुरागः Love. अन्तःपुरं Women's apartments.

---

## २१. द्रौपदीवस्त्रहरणम् ।

### ( प्रथमो भागः )

भ्रातुःशासनं श्रुत्वा राजपुत्रो दुःशासनः समुत्थाय पाण्डवानां वेश्म प्रविश्य राजपुत्रीं द्रौपदीमब्रवीत् । एह्येहि, पाञ्चालि, जितासि कृष्णे । विमुक्तलज्जा त्वं दुर्योधनं पश्य, कुरून् भजस्व च । इति श्रुत्वा सा दुःखार्ता समुत्थाय विवर्णं मुखं करेणामृज्य प्राद्रवद्यत्र वृद्धस्य राज्ञः स्त्रिय आसन् । ततो दुःशासनस्तां जवेनाभ्यसरत्केशेषु च नरेन्द्रपत्नीमगृह्णात् । सा द्रौपदी कृष्यमाणा शनैरवदत् । अनार्य, एकं च वासो ममातः सभां मां नेतुं नाऽर्हसीति । ततस्तां कृष्णां केशेषु प्रसभं निगृह्य दुःशासनोऽब्रवीत् । याज्ञसेनि, एकाम्बरा वा विवस्त्रा वा भव, द्यूते जिता चासि कृतासि दासी । इत्युक्त्वा तेन सा प्रकीर्णकेशी पतितार्धवस्त्रा च सभामध्ये नीता ।

### ( द्वितीयो भागः )

ततः कर्णेनाभिहितम् । दुःशासन, पाण्डवानां द्रौपद्याश्च वासांस्युपाहरेति । तदा सर्वे पाण्डवाः स्वानि वासांस्यवकीर्य सभायां समुपाविशन् । ततो दुःशासनो द्रौपद्या वसनं सभामध्ये व्यपाक्रष्टुं प्राक्रमत ।

आकृष्यमाणे वसने, द्रौपद्या चिन्तितो हरिः । हे गोविन्द, द्वारकावासिन्कृष्ण, कौरवैः परिभूतां मां किं न जानासि । केशव, कौरवार्णवमग्नां मामुद्धरस्व । हे विश्वभावन, पाहि मां प्रपन्नाम् । इत्यनुस्मृत्य त्रिभुवनेश्वरं कृष्णं सा भामिनी मुखमाच्छाद्य प्रारोदीत् । विपत्ती मे पड़ी हुई

याज्ञसेन्या वचः श्रुत्वा कृष्णस्तां विविधैः सुवस्त्रैः समावृणोत् । आकृष्यमाणे द्रौपद्या वसने, वस्त्रमपरं प्रादुरासीदनेकशः । नानारागविरागाणि

वसनानि शतशः प्रादुर्भवन्ति । तदद्भुततमं वीक्ष्य सर्वे महीभृतो द्रौपदीं आशंसन् धृतराष्ट्रजं चानिन्दन् ।

## EXERCISES.

(1) (*a*) Explain उपपद समास.

उपपद स. is a variety of तत्पु. स. When a word, derived from a root, stands as the principal member of तत्पु. स. the compound is उपपद स. e. g.

विश्वभावनः = विश्वं भावयतीति ।

(*b*) Name and dissolve the following compounds :—

दुःखार्ता ; अनार्य ; महीभृतः ; धृतराष्ट्रजः.

(2) Explain the forms :—

समुत्थाय, वेश्म, एहि, अभिहितम्, अवकीर्य, मग्न, प्रपन्नाम्, वीक्ष्य.

(3) Q. अतिसंक्षेपेण वर्ण्यतां द्रौपदीवस्त्रहरणवृत्तान्तः ।

वेश्मन् A house. विवर्ण Pale. आमृज्य Having wiped off. वृद्धः राजा The old king, *i. e.* king धृतराष्ट्र. प्रसभं Forcibly. अम्बरं A garment. प्रकीर्णकेशी A woman with the hair dishevelled. पतितार्धवस्त्रा With half the garment slipped down. अवकीर्य Took off. विश्वभावन A creator of the universe. प्रपन्न Surrendered oneself to. नानारागविरागाणि Of different colours.

## २२. मयसभावर्णनम् ।

सभा च सा महाराज शातकुम्भमयद्रुमा ।
प्रबभौ ज्वलमानेव दिव्या दिव्येन वर्चसा ॥ १ ॥
आयता विपुला रम्या विपाप्मा विगतक्लमा ।
उत्तमद्रव्यसंपन्ना रत्नप्राकारतोरणा ।
बहुचित्रा बहुधना निर्मिता विश्वकर्मणा ॥ २ ॥
तां स्म तत्र मयेनोक्ता रक्षन्ति च वहन्ति च ।
सभामष्टौ सहस्राणि किंकरा नाम राक्षसाः ॥ ३ ॥
तस्यां सभायां नलिनीं चकाराऽप्रतिमां मयः ।
पुष्पितैः पङ्कजैश्चित्रां कूर्मैर्मत्स्यैश्च काञ्चनैः ।
चित्रस्फटिकसोपानां निष्पङ्कसलिलां शुभाम् ॥ ४ ॥
मणिरत्नचितां तां तु केचिदभ्येत्य पार्थिवाः ।
दृष्ट्वाऽपि नाऽभ्यजानन्त तेऽज्ञानात्प्रपतन्त्युत ॥ ५ ॥
जलजानां च पद्मानां स्थलजानां च सर्वशः ।
मारुतो गन्धमादाय पाण्डवान्स्म निषेवते ॥ ६ ॥
ईदृशीं तां सभां कृत्वा मासैः परिचतुर्दशैः ।
निष्ठितां धर्मराजाय मयो राजन्न्यवेदयत् ॥ ७ ॥

### EXERCISES.

( 1 ) Explain the following forms :—
शांतकुम्भमय, संपन्न, अष्टौ, अभ्येत्य, आदाय, निष्ठित.

( 2 ) Write notes on :—
नाम; उत; स्म; धर्मराजाय न्यवेदयत्.

(3) (a) Explain बहुव्रीहि समास

बहुव्रीहि समास consists of two members. The whole compound is an adjective qualifying a third word which is not expressed in the compound. e. g.

निष्पङ्कम् ( सलिलम् ) = निर्गतं पङ्कं यस्मात् तत् ।

(*b*) Name and dissolve the following compounds :—

विवर्णम् : एकाम्बरा; विवस्त्रा; प्रकीर्णकेशी; विगतक्लमा ; अप्रतिमा ; जलजम् ; स्थलजम्.

शातकुम्भं Gold. वर्चस् Lustre. प्राकारः A rampart. तोरणः–णं An outer gate. मयेनोक्तः Ordered by Maya. नलिनी A lotus-pond. विपाप्मा ( वि+पाप्मन् ) One that destroys sins ( or diseases ). विगतक्लमा One that removes fatigues. अप्रतिम Incomparable. स्फटिकसोपानं Stairs made of crystals. निष्पङ्कसलिला ( A pond ) with its waters void of mud. जलजं पद्मं A lotus born in water and स्थलजं पद्मं A lotus produced on land. निष्ठित Completed.

---

## २३. ऐन्द्रजालिकः ।

( ततः प्रविशत्यैन्द्रजालिको हस्ते पिच्छिकां गृहीत्वा )

**ऐन्द्रजालिकः**—( पिच्छिकां भ्रमयन् ) जयतु जयतु देवः । देव ।

किं धरण्यां मृगाङ्क आकाशे महीधरो जले ज्वलनः ।

मध्याह्ने प्रदोषो दर्श्यतां देह्याज्ञप्तिम् ॥ १ ॥

अथवा किं बहुना जल्पितेन ।

मम प्रतिज्ञैषा यद्यद् हृदयेनेहसे संद्रष्टुम् ।
तत्तद्दर्शयाम्यहं गुरोर्मन्त्रप्रभावेण ॥ २ ॥

**राजा**—( राज्ञीं प्रति ) देवि, बहुतरमनेन गर्जितम् । पश्यामस्तावत् ।

**राज्ञी**—उज्जयिनीत आगत इत्यस्ति मेऽस्मिन्नैन्द्रजालिके पक्षपातः ।

**राजा**—( ऐन्द्रजालिकं प्रति ) भद्र, प्रस्तूयतामिन्द्रजालम् ।

**ऐन्द्रजा०**—यद्देव आज्ञापयति । ( इति पिच्छिकां भ्रमयन् )

हरिहरब्रह्मप्रमुखान्देवान्दर्शयामि देवराजं च ।
गगने सिद्धचारणसुरवधूसार्थं च नृत्यन्तम् ॥ ३ ॥

तत्प्रेक्षतां देवः ।

**राजा**—( ऊर्ध्वमवलोक्य ) आश्चर्यमाश्चर्यम् । देवि पश्य ।

एष ब्रह्मा सरोजे रजनिकरकलाशेखरः शंकरोऽयं
दोर्भिर्दैत्यान्तकोऽसौ सधनुरसिगदाचक्रचिह्नैश्चतुर्भिः ।
एषोऽप्यैरावतस्थस्त्रिदशपतिरमी देवि देवास्तथान्ये
नृत्यन्ति व्योम्नि चैताश्चलचरणरणन्नूपुरा दिव्यनार्यः ॥ ४ ॥

**विदू०**—( अपवार्य ) आः दास्याःपुत्र ऐन्द्रजालिक, किमेतैर्देवैरप्सरोभिश्च दर्शितैः । यदि तेऽनेन परितुष्टेन कार्यं तत्सागरिकां दर्शय ।

**वसुंधरा**—( प्रविश्य राजानं चोपसृत्य ) जयतु जयतु भर्ता । विक्रमबाहोः प्रधानामात्यो वसुभूतिरागतः । तदर्हति देवस्तं प्रेक्षितुम् ।

**राज्ञी**—आर्यपुत्र तिष्ठतु तावदिन्द्रजालम् । मातुलगृहात्प्रधानामात्यो वसुभूतिरागतः । तं तावत्प्रेक्षतामार्यपुत्रः ।

**राजा**—यथाऽऽह देवी। ( ऐन्द्रजालिकं प्रति ) भद्र, विश्रम्यतामिदानीम् ।

**ऐन्द्रजा०**—यद्देव आज्ञापयति । ( पुनः पिच्छिकां भ्रमयति । ) ( निष्कामन् । ) एकः पुनर्मम खेलोऽवश्यं देवेन प्रेक्षितव्यः ।

**राजा**—भद्र, द्रक्ष्यामः ।

**राज्ञी**—काञ्चनमाले, गच्छ त्वं देह्यस्य पारितोषिकम् ।

**काञ्चन०**—यद्देव्याज्ञापयति । ( ऐन्द्रजालिकेन सह निष्क्रान्ता )

## EXERCISES.

( 1 ) Explain the following forms :—
भ्रमयन्, प्रस्तूयताम्, व्योम्नि, प्रेक्षितव्यः.

( 2 ) Explain :—
किं जल्पितेन; दास्याः पुत्रः; मृगाङ्कः.

ऐन्द्रजलिकः A magician. पिच्छिका A bunch of peacock's feathers. मृगाङ्कः The moon. महीधरः A mountain. ईह् ( ईहते ) To desire. मन्त्रप्रभावः The power of incantations. अवहित Attentive. पक्षपातः Partiality. गर्जितम् Talked boastingly. प्रस्तूयताम् Begin. रजनिकरः The moon. कला A digit. शेखरः A crest. दोस् An arm. अन्तकः A destroyer. ऐरावतस्थ Seated on the elephant ऐरावत. त्रिदशपतिः Indra. व्योमन् The sky. नूपुराः Anklets. दास्याः पुत्रः A slave's son.

## २४. संकीर्णश्लोकाः ।

वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ॥ १ ॥

खलः सर्षपमात्राणि परच्छिद्राणि पश्यति ।
आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यति ॥ २ ॥

अतिपरिचयादवज्ञा संततगमनादनादरो भवति ।
मलये भिल्लपुरंध्री चंदनतरुकाष्ठमिंधनं कुरुते ॥ ३ ॥

सर्पाः पिबन्ति पवनं न च दुर्बलास्ते
शुष्कैस्तृणैर्वनगजा बलिनो भवन्ति ।
कंदैः फलैर्मुनिवराः क्षपयन्ति कालं
संतोष एव पुरुषस्य परं निधानम् ॥ ४ ॥

नरपतिहितकर्ता द्वेष्यतां याति लोके
जनपदहितकर्ता त्यज्यते पार्थिवेन्द्रैः ।
इति महति विरोधे वर्तमाने समाने
नृपतिजनपदानां दुर्लभः कार्यकर्ता ॥ ५ ॥

सुखं हि दुःखान्यनुभूय शोभते घनांधकारेष्विव दीपदर्शनम् ।
सुखात्तु यो याति नरो दरिद्रतां धृतः शरीरेण मृतः स जीवति ॥६॥

व्यतिषजति पदार्थानांतरः कोऽपि हेतु-
र्न खलु बहिरुपाधीन्प्रीतयः संश्रयंते ।
विकसति हि पतंगस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चंद्रकांतः ॥ ७ ॥

कुतो धर्मक्रियाविघ्नः सतां रक्षितरि त्वयि।
तमस्तपति घर्मांशौ कथमाविर्भविष्यति ॥ ८ ॥

भवन्ति नम्रास्तरवः फलागमैर्नवाम्बुभिर्दूरविलम्बिनो घनाः।
अनुद्धताः सत्पुरुषाः समृद्धिभिः स्वभाव एवैष परोपकारिणाम् ॥९॥

मित्रं प्राप्नुत सज्जना जनपदैर्लक्ष्मीः समालभ्यतां
भूपालाः परिपालयन्तु वसुधां शश्वत्स्वधर्मे स्थिताः।
आस्तां मानसतुष्टये सुकृतिनां नीतिर्नवोढेव वः
कल्याणं कुरुतां जनस्य भगवांश्चन्द्रार्धचूडामणिः ॥ १० ॥

वज्रं An adamant. लोकोत्तराः ( नराः ) High-souled ( persons ). सर्षपः A mustard. बिल्वं A kind of fruit. अपरिचयादवज्ञा Familiarity breeds contempt. अनादरः Disrespect. पुरंध्री An elderly woman. इंधनं Fuel. ( क्षपयन्ति 3rd pers. Plu. Pres. of क्षै causal ( क्षपय To pass ). नरपतिः A king. जनपदः Subjects. समान Equal. व्यतिषजति 3rd Pers. Sing. Pres. of व्यति-सञ्ज् To bind together. आन्तर Internal. कोऽपि हेतुः Some indescribable cause. बहिरुपाधीन् ( Acc. Plu. ) External circumstances. विकसति ( वि-कस् ) Opens. पतंगः The sun. हिमरश्मि : The Moon. चंद्रकांतः The Moon-stone. धर्मक्रियाविघ्नः An obstacle to the performance of religious rites. घर्मांशुः The sun. फलागमः Appearance of fruit. दूरविलम्बिन् Hanging low. अनुद्धत Polite. समृद्धिः Prosperity. जनपदाः Country people. लक्ष्मीः wealth. शश्वत्स्वधर्मे स्थिताः

(भूपालाः) Ever abiding by their duty. नीतिः Policy. मानसतुष्टिः Satisfaction of the mind. नवोढा (नव + ऊढ) A wife newly married. चन्द्रार्धचूडामणिः One having the crescent moon for his crest-jewel, *i. e.* God Shankara.

